* ॐ *

अथ

# श्रीपरामहिमस्तोत्रम्









कर्ता

श्री मेजर-जनरल धनशम्शेर जङ्गबहादुर राणा



॥ अथ ॥

# ॥ श्री परामाहिमस्तोत्रम् ॥



कर्ता

श्री मेजर-जनरल धनशम्शेर जङ्गबहादुर राणा



सम्वत् २००० साल



## ॥ अथ ॥

# ॥ प्रस्तावना ॥

॥ श्रीगणेशाय नमः ॥

पूर्णानन्दगुरुं शिवं क्रमगुरुं श्रीदक्षिणामूर्त्तिकम्
श्रीमद्भैरवचारुपादकमलं ह्युन्मत्तदेवं परम् ॥
श्रीनाथादिगुरुत्रयं क्रमगतां श्रीस्वेष्टदेवीं पराम्
वन्देऽहं कुलदेवतां परशिवानन्दं पराम्बामपि ॥*॥

भोः विद्वद्वृन्दारकाः !

सकलजगत्कारणभूतयन्त्रमन्त्रात्मकपरब्रह्मचैतन्यरूपिण्याः पराशक्तेः सपर्यापर्यायभूतं सकलाम्नायवित्पंचवक्त्रापरपर्यायशिववक्त्राम्बुजनिर्गताम्नायभेदबोधकं चैतत् "श्रीपरामहिमस्तोत्रम्" यथाज्ञानं निर्माय भवतां नयनारविन्दगोचरीकर्तुमत्र समुद्यतोऽस्मि । कुतोऽस्माकं सहृदयहृदयाह्लादजनकपदलालित्यरसालङ्कारादिसमलंकृतपद्यनिर्मितिसामर्थ्यम् ? केवलं निजगुरुकृपाप्रसादलब्धविद्यो निजाल्पबुद्ध्या यथानुभूतं च लेशतोऽवधार्य सृष्टिस्थितिसंहारानाख्याभाषाकारणात्मकश्रीपरदेवतायाः षट्प्रकाराम्नायभेदेन मन्त्रचक्रध्यानोपासनाक्रमाध्यवसायं निज चेतसि दृढीकृत्य स्थापयितुं गुणनिकामात्रं कृतवानस्मि । ततो भवद्भिर्मम यदस्मिन् दोषजातं तत् करुणापूर्णहृदयैः क्षन्तव्यमित्याशास्ते ।

प्रार्थयिता —
धनशम्शेरः



# सम्मति

शाक्त-जगत् को यह भली भाँति विदित है कि पोखरा (नेपाल) निवासी तान्त्रिक-शिरोमणि शास्त्रिक-प्रवर कवि-वर मेजर जनरल श्रीयुत धनशमशेर जङ्गबहादुर राणा श्री जगज्जननी राजराजेश्वरी के एक अनन्य उपासक हैं। राजकाज तथा नित्यकृत्य के अतिरिक्त अवशिष्ट समय में आप श्री जगदम्बा की स्तुति मधुर-पदावली-गुम्फित ललित कवित्त में लिख तथा छपवा कर निःशुल्क वितरण करके से यथावकाश श्री ललिता त्रिपुरसुन्दरी के उपासकवृन्द की सेवा करते रहते हैं।

सब से पहले आपने 'श्रीपराविभूतिस्तोत्र' की रचना की है जो कि श्रीविद्योपासकों के लिये वास्तव में पराविभूति ही है। आपका यह स्तोत्र निखिल निगमाचार्य श्री पुण्यानन्दाचार्य के 'कामकलाविलास' के मुकाबले का है। आपकी दूसरी पुस्तक 'श्रीसोमानन्दलहरी' है जोकि ध्यानपूर्वक पढ़ने से पाठक के हृदय में एक अद्भुतानन्द-लहरी पैदा कर देती है।

अब आपने "श्रीपरममहिमस्तोत्र" नामक तीसरी पुस्तक लिखी है। इस स्तोत्र में आपने वड़वानल, बृहद्वड़वानल, कुलार्णव आदि अनेक तन्त्रों के महार्णव को अपनी बुद्धि-रूपिणी मथानी से मथ कर तथा अद्वितीय षडाम्नाय-वर्णनाऽमृत निकालकर देवतोपासकों के लिये समर्पण किया है।

इस स्तोत्र में प्रकाश और विमर्श से रक्त, शुक्ल और मिश्र बिन्दुओं की उत्पत्ति, कामकला विलास, प्रणव और सप्तस्वरों का आविर्भाव, [illegible]कारात्मक बिन्दु से दिन, रात्रि और सन्ध्या स्वरूप महाकाल तथा उसको कलन करने वाली महाकाली स्वरूपा त्रिपुरसुन्दरी का वर्णन किया है। पुनः षट्चक्र और षडाम्नायों का वर्णन [illegible] किया गया है। प्रत्येक आम्नाय का देवता, उसका सगुण और निर्गुण ध्यान, यन्त्र तथा बीज मन्त्र अच्छे प्रकार से दर्शाये गये हैं। अन्त में प्रकाश, विमर्श एवं बिन्दुत्रय की भावना दिखा कर संकेत किया गया है। आगे चल कर किस आम्नाय के किस विधान से तथा किस आचार से श्रीमाता की उपासना करनी चाहिये, यह सब विशद रूप में दिखाया गया है।

इस छोटी सी स्तुति में तन्त्रों का सार खींच कर रख देने से लेखक ने गागर में सागर भर दिया है। इस स्तोत्र की [illegible] स्वयं विशद व्याख्या कर समर्थ [illegible] में नाना प्रकार के निगमागम वचनों को देकर कवित्व के समझने के लिये कवि महाशय ने कठिनता का लेशमात्र भी नहीं रहने दिया। इसकी रचना शाक्तमात्र के उपकार की दृष्टि से की गई है। इसे पढ़कर पाठक तन्त्रसार का ज्ञाता हो सकता है। अत एव यह शाक्तमात्र के बड़े उपकार की वस्तु है। [illegible] पुस्तक हाथ में आने पर आप ही [illegible] यत 'बहि [illegible] विभाव्यते' इति।

साहित्यरत्न पं० योगेन्द्रकृष्ण दौर्गादत्ति शास्त्री
मेरठ साहित्याचार्य
२५-८-४३ हेड पण्डित, गवर्नमेन्ट हाई स्कूल मेरठ

सः ॥ यथा पुरुषः पूर्वं वदनदर्शनात् प्रतीतिमारोहति, तथा शिवोऽपि विमर्शादेव प्रतीतिमारोहति ॥ तथा परशिवप्रती प्रकाशः आस्यत्वेन (द्वारत्वेन) अध्यवस्यते ॥ स चाहमित्यात्म विमर्शः शब्दात्मको भूत्वा परशिवस्य आस्यत्वेन विश्रा तीति भावः ॥ न विद्यते अन्तो नाशो यस्य सः ॥ निजस्य स्व तनुः शरीरं तस्याः कला शक्तिः तस्याः धाम| तेजः पु स एव विभवः ऐश्वर्यं यस्य सः ॥ स्वशक्तिसहाय्ये जगन्निर्माणकर्तृत्वमस्येति भावः ॥ निर्गतो विगतः आका ऽस्मदादीनाम् इव करचरणादि मद्विग्रहो यस्य सः ॥ नित कालत्रयेपि विद्यमानः ॥ अचलः स्थिरः शुभरूपः सौम्याकृ एव एकरसः एकरसास्वादः तेन युज्यते युक्तो भवति इति सत्ता विद्यमानता आकृतिः स्वरूपं यस्य सः ॥ स एव परशि ब्रह्म ॥ हि निश्चयेन ॥ सदा निरन्तरं ॥ अविशदा मलिना म बुद्धिः येषां ते तेषाम् ॥ अतएव हिताहितज्ञानविहीनाना अविद्यया विमोहितानामित्यर्थः ॥ अस्माकं चराचरप्राणिनाम् रक्षां रक्षणम् ॥ रचयतु विदधातु ॥

## तत्र शास्त्रवचनप्रमाणम्

"यतो विश्वं समुद्भूतं येन जातञ्च तिष्ठति ।
यस्मिन् सर्वाणि लीयन्ते ज्ञेयं तद्ब्रह्मलक्षणैः ॥" इ
श्रीमहानिर्वाणतन्त्रवचन

"यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥"
श्रीमहानारायणश्रुतिवचन

"हृदयकमलमध्ये निर्विशेषं निरीहं
हरिहरविधिवेद्यं योगिभिर्ध्यानगम्यम् ।

जननमरणभीतिभ्रंसि सच्चित्स्वरूपं
सकलभुवनबीजं ब्रह्मचैतन्यमीडे ॥" इति
श्रीमहानिर्वाणतन्त्रवचनम् ।

"सत्ता चितिः सुखं चेति स्वरूपं ब्रह्मणस्त्रयम् ।" इति
वेदान्तवचनम् ।

॥ १ ॥

अजा साक्षादाद्या सकलजगतो बीजममरा
गुणातीते नित्यागमनिगमरूपा परकला ॥
स्फुरत्ते चिच्छक्ते सुखनिरुपमाकारपरमा
विमर्शादर्शाख्या जयसि जननि त्वं परशिवे ॥२॥

अन्वयः — (हे) गुणातीते ! स्फुरत्ते ! चिच्छक्ते ! जननि ! परशिवे ! सकलजगतः बीजं अजा अमरा नित्या आगमनिगमरूपा परकला सुखनिरुपमाकारपरमा साक्षात् आद्या विमर्शादर्शाख्या त्वं जयसि ॥

व्याख्या — हे गुणातीते निर्गुणे । स्फुरत्ते स्फुरणशक्ते ! चिच्छक्ते चैतन्यस्वरूपे ! जननि मातः ! परशिवे ब्रह्मशक्ते ! सकलं निखिलं जगत् भुवनम् तस्य ॥ बीजं कारणं ॥ न जाता अजा जन्मरहिता ॥ न म्रियते या सा अमरा मरणधर्म्मरहिता ॥ नित्या कालत्रयेऽपि विद्यमाना ॥ आगमश्च तन्त्रश्च निगमश्च वेदश्च रूपं आकृतिः यस्याः सा ॥ परकला ब्रह्मचैतन्यरूपा ॥ सुखं आनन्द एव निरुपमः निर्विशेषः आकारः स्वरूपं यस्याः सा चासौ परमा अत्युत्तमा ॥ साक्षात् आद्या आदिकारणीभूता ॥ इच्छामि जानामि करोमि इति उत्तमपुरुषान्तर्गतस्फु-

रणारूपोऽहमिति विमर्शः स एव आदर्शः स एव आख्या यस्याः सा ॥ त्वं जयसि सर्वोत्कर्षेण वर्तसे ॥

तत्र शास्त्रवचनप्रमाणम्

"त्वं परा प्रकृतिः साक्षाद् ब्रह्मणः परमात्मनः ।
त्वत्तो जातं जगत् सर्वं त्वं जगज्जननि शिवे ॥
महदाद्यणुपर्यन्तं यदेतत् सचराचरम् ।
त्वयैवोत्पादितं भद्रे त्वदधीनमिदं जगत् ॥
त्वमाद्या सर्वविद्यानामस्माकमपि जन्मभूः ।
त्वं जानासि जगत्सर्वं न त्वां जानाति कश्चन ॥" इति

श्रीमहानिर्वाणतन्त्रवचनम् ।

"यदा सा परमाशक्तिः स्वेच्छया विश्वरूपिणी ।
स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः ॥
यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं जगदेतच्चराचरम् ॥" इति

श्रीकुलालिकाम्नायतन्त्रवचनम् ।

"एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
यस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ॥" इति

आगमवचनम् ।

"प्रकाशश्च विमर्शश्च स्पन्दः सत्ता चितिः क्रिया ।
स्फुरत्तेति समाख्याता सा वै त्रिपुरसुन्दरी ॥" इति च

आगमवचनम् ।

॥ २ ॥

प्रकाशास्ये साक्षाद्विमलकिरणे श्रीपरशिवे
विमर्शादर्शेऽस्मिन्स्वमुखकमलालोकनपरे ।
प्रतीतिं संप्राप्य प्रतिफलति चित्ते विभुरयम्
ह्यहङ्कारो भूत्वा नयति वशतां सर्वभुवनम् ॥ ३ ॥

अन्वयः — विमलकिरणे प्रकाशास्ये साक्षात् श्रीपरशिवे
अस्मिन् विमर्शादर्शे स्वमुखकमलालोकनपरे प्रतीतिं संप्राप्य
पुनः चित्ते प्रतिफलति । अयं विभुः अहङ्कारः भूत्वा सर्वभुवनं
हि वशतां नयति ॥

व्याख्या — विमलाः निर्मलाः किरणाः मयूखाः यस्य सः
तस्मिन् ॥ प्रकाशः पूर्वोक्तप्रकाशः स एव आस्यं वदनं यस्य सः
तस्मिन् ॥ श्रीपरशिवे श्रीपरब्रह्मणि ॥ स्वस्य निजस्य मुख-
कमलं वदनपद्मं तस्य आलोकनं दर्शनं तस्मिन् ॥ परः तत्परः
तस्मिन् ॥ एवं भूते सति ॥ प्रतीतिं संप्राप्य विमर्शादर्शे प्रति-
फलनं अवाप्य ॥ पुनः चित्ते अनेकस्वरूपे चित्ते प्रति-
फलति सति संक्रमे सति ॥ अयं चित्तप्रतिफलितमहाबिन्दु-
भावः विभुः व्यापकः अहङ्कारः भूत्वा ॥ सर्वभुवनं समस्त-
विश्वगोलं ॥ वशतां अधीनतां ॥ नयति विदधाति ॥ यथा
कश्चिन्नरः अतिसुन्दरः स्वात्माभिमुखस्थितस्वच्छादर्शतले
स्वात्मप्रतिबिम्बमहमिति जानाति, एवं श्रीपरशिवः (ब्रह्म) अपि
स्वाधीनभूतां स्वात्मशक्तिं समस्तरूपधरामिति पूर्णोऽहमिति एवञ्च
दर्पणस्य स्वसन्निहितवस्तु सम्बन्धाभावे स्वान्तर्गत प्रति-
बिम्बावभासनम् अनुपपन्नं भवति इति भावार्थः ॥

## तत्र शास्त्रवचनप्रमाणम्

"जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि ।
स्वयमेव समालोक्य प्रीणाति परमेश्वरः ॥" इति
आगमवचनम् ।

"सा स्फुरत्ता महासत्ता देशकालविशेषिणी ।
सैषा सारतया चोक्ता हृदये परमेष्ठिनः ॥" इति
प्रत्यभिज्ञावचनम् ।

"प्रकाशस्यात्मविश्रान्तिरहंभावे हि कीर्तितः ॥" इति च
आगमवचनम् ।

"ब्रह्म वा इदमग्र आसीत् । तदात्मानमेव वेद अहं ब्रह्मास्मि ।"
इति "अ इति ब्रह्म तत्रागतमहम् ।" इति च
कण्वश्रुतिवचनम् ।

॥ ३ ॥

चिदात्मावैकोऽहं विविधतनुमान् खेलनपरो
भविष्यामीतीच्छावितितिरुदभूच्छ्रीपरशिवे ॥
ततोऽहङ्कारात्माखिलजगति वीजांकुरमयो
महेशाद्याकारो विमलपरविन्दुः समजनि ॥४॥

अन्वयः — "चिदात्मा एव एकः अहं खेलनपरः विविध-तनुमान् भविष्यामि" इति श्रीपरशिवे इच्छावितितिः उदभूत् । ततः अहङ्कारात्मा विमलपरविन्दुः वीजांकुरमयः महेशाद्याकारः अखिलजगति समजनि ॥

व्याख्या — चिदात्मा एव अखण्डचैतन्यघनस्वरूपः ॥ एकः अद्वितीयः ॥ अहम् ॥ खेलनपरः क्रीडातत्परः सन् ॥ विविधतनुमान् नानाशरीरी ॥ भविष्यामि ॥ इति एतादृशी ॥ श्रीपरशिवे परब्रह्मणि ॥ इच्छावितति: इच्छाविस्तारः महेच्छा इत्यर्थः ॥ उदभूत् प्रादुर्बभूव ॥ ततः तदनन्तरं ॥ अहङ्कारात्मा अकारः अनुत्तरस्य परामर्शकः, हकारः अनुत्तरस्यैव अनाहतरूपेण किञ्चित्स्थूलरूपतामापन्नस्य परामर्शकः, मकारः अनुत्तरानाहतयोर्विश्रान्तिधाम्नः परामर्शकः, तथा च अनुत्तरानाहतावभासविश्रान्तत्वेन शब्दराशिस्फारात्मकपराहन्ताविमर्शस्वरूपस्य स्वात्मस्वरूपतया स्फुरणमहमित्यहङ्कारः स एव आत्मा स्वरूपं यस्य सः ॥ विमलः निर्मलः परः श्रेष्ठः स चासौ विन्दुः ॥ वीजश्च अंकुरश्च तन्मयः ॥ महेशश्च प्रकाशश्च आद्या च विमर्शश्च तयोः आकारः स्वरूपः शिवशक्त्यात्मकप्रकाशविमर्शरूपः इत्यर्थः ॥ अखिलजगति समस्तविश्वगोले ॥ समजनि जातः ॥

## तत्र शास्त्रवचनप्रमाणम्

"स्वच्छयैव जगत् सर्वं निर्मिमीत्युद्गिरत्यपि ॥" इति आगमवचनम् ।

"एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान्
निहितार्थो दधाति" इति श्रुतिवचनम् ।

"कस्त्वमित्यहमिति होवाच । अहमेवेदं सर्व्वम् । तस्मादेवाहमिति सर्वाभिधानमिति ॥" इति च श्रुतिवचनम् ।

भूतनिखिलप्रपञ्चविलयात्मकविमर्शशक्तिमनुप्रविश्य बिन्दुभावमेति ॥ ततः सा विमर्शशक्तिरपि स्वान्तर्गतप्रकाशमयबिन्दुमनुप्रविशति ॥ ततश्च बिन्दुरुच्छूनो भवति ॥ तस्माद्बिन्दोर्नादात्मिका समस्ततत्वगर्भिणी तेजोमयी बीजरूपा बाला प्रवत् सूक्ष्मरूपिणी निर्गत्य शृङ्गाटकरूपतामुद्वहते ॥ ततश्च बिन्दुनादस्वरूपयोस्तयोः प्रकाशविमर्शयोः अहमिति शरीरं भवति ॥ एवं द्विरूपस्तयोर्मध्ये एको विमर्शः रक्तबिन्दुतां भजते, अपरः प्रकाशः शुक्लबिन्दुभावमेति । उभयोर्मेलने मिश्ररूपं सर्वतेजोमयं परमात्मस्वरूपं भवति । एवं रक्तशुक्लबिन्दुयुगलं जगत् सृजति, शुक्लारुणमिश्रबिन्दुत्रयेण पालयति, केवलः मिश्रबिन्दुः प्रलयति ॥ काम्यते योगिभिः स्वात्मत्वेन इति कामः स एव मिश्रबिन्दुः ॥ कला च अन्यबिन्दुयुगलम् ॥ तेषां समूहः एव कामकला (महामाया) इत्युच्यते ॥ एवं सकललीला एव शिवताण्डवमित्युच्यते ॥ सगुणध्यानेऽपि यदा काली सृजति (सा एव पूर्वोक्तकला) तदा कालो नृत्यति (स एव कामः) ॥ यदा कालः प्रलयति तदा काली नृत्यति ॥ एवं सुविदितमहाताण्डवम् ॥ आसीत् अभवत् ॥ अथो अनन्तरं विधुश्चन्द्रः दहनः अग्निः सूर्य्यः आदित्यः तेषां अंशाः भागाः तेषां जनकः उत्पादकः ॥ त्रिधा त्रिप्रकारेण अभूत् ॥ विधोः चन्द्रमसः शुभ्रः श्वेतः विन्दुः अग्नेः दहनस्य अरुणः रक्तः विन्दुः सवितुः सूर्य्यस्य उपमिश्रः मिश्रबिन्दुः ॥ अभूत् इति शेषः ॥

## तत्र शास्त्रवचनप्रमाणम्

"मेघाङ्गीं शशिशेखरां त्रिनयनां रक्ताम्बरां बिभ्रतीं
पाणिभ्यामभयं वरञ्च विलसद्रक्तारविन्दस्थिताम् ।

नृत्यन्तं पुरतो निपीय मधुरं माध्वीकमद्यं महा-
कालं वीक्ष्य विकासिताननवरामाद्यां भजे कालिकाम् ॥" इति
श्रीमहानिर्वाणतन्त्रवचनम् ।

"डिम्भं डिम्भं सुडिम्भं पचमनदुहसां झप्रकम्पं प्रझम्पम्
त्रिल्लं त्रिल्लं त्रित्रिल्लं त्रिखलमखमखा खंखमंखंखमंखम्
गूहं गूहं तु गुह्यं गुडलुगुडमुदा दाडिमाडिम्बुदेति
नृत्यन्ती शब्दवाद्यैः प्रलयपितृवने श्रेयसे वोऽस्तु काली ॥" इति
आगमवचनम् ।

"यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ।
सा तु सर्वेश्वरी देवी स सर्वोऽपि महेश्वरः ॥" इति
चतुःशतीवचनम् ।

"शक्त्या विना शिवे शुष्के नाम धाम न विद्यते ।
शिवं विना चित्कलानां कलात्वं न क्वचिद् भवेत् ॥
वीजांकुरन्याययोगाच्छिवशक्त्यात्मकं महः ।
सदा जागर्ति देवेशि नानारूपाणि दर्शयेत् ॥" इति
तन्त्रान्तरवचनम् ।

॥ ५ ॥

यदोच्छूनाद्बिन्दोर्जननि प्रखरो विस्तृततर-
स्तदा जातो नादो निखिलभुवनानां वशकरः ॥
स वै ताराकारो जगति विदितास्ते सुखकरा-
स्ततो जाता रावाः षडृगमपधाख्या निसहिताः ॥६॥

अन्वयः — (हे) जननि ! यदा बिन्दोः उच्छूनात् प्रखर
विस्तृततरः निखिलभुवनानां वशकरः नादः जातः, तदा सवै

ताराकारः (अभवत्)। ततः जगति विदिता सुखकराः निसहिताः षऋगमपधाख्याः ते रावाः जाताः।

॥ व्याख्या — हे जननि मातः॥ यदा यस्मिन् समये॥ विन्दोः पूर्वोक्त प्रकाशविमर्शात्मकाहङ्कारात्मनः विन्दोः॥ उच्छूनात् पीवरत्वगमनात्॥ प्रखरः तीव्रतरः॥ विस्तृततरः अतिस्थूलः॥ निखिलभुवनानां सकललोकानां॥ वशकरः अधीनकारकः॥ नादः शब्दः॥ जातः उत्पन्नः॥ तदा तस्मिन् समये॥ सवै नादः॥ ताराकारः प्रणवरूपः॥ अभवत् इति शेषः॥ ततः तत्प्रणवादेव॥ जगति लोके॥ विदिताः प्रसिद्धाः॥ सुखकराः आनन्ददाः॥ नि निषादः तेन सहिताः समेताः॥ ष षड्जश्च ऋ ऋषभश्च ग गान्धारश्च म मध्यमश्च प पञ्चमश्च ध धैवतश्च ते आख्या एषां ते॥ ते रावाः सप्तस्वराः॥ जाताः उत्पन्नाः॥

## तत्र शास्त्रवचनप्रमाणम्

"वैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी।
सदाशिवेन संपृक्ता तत्वातीता महेश्वरी॥" इति
श्रीभैरवयामलवचनम्।

"एको नादात्मकोऽवर्णः सर्ववर्णविभागवान्।
सोऽनस्तमितरूपत्वादनाहत इति श्रुतः॥" इति
श्रुतिवचनम्

॥ ६ ॥

त्रिधाभूते बिन्दौ प्रणवमयनादे विकसिते
वपुः स्पष्टं किञ्चिच्छुभमुदितवच्छक्तिशिवयोः ।
अतः साकारोऽभूत् स हि परमहंसः परशिवः
सदेहा ह्रीश्रीयुक् प्रकृतिरपि चाभूः परकले ॥७॥

अन्वयः — बिन्दौ त्रिधाभूते प्रणवयुतनादे विकसि[ते] शक्तिशिवयोः शुभं किञ्चित् स्पष्टं वपुः उदितवत् । अतः स[ः] परशिवः हि साकारः परमहंसः अभूत् । (हे) परकले ! (त्व[म्]) अपि च ह्री श्रीयुक् प्रकृतिः अभूः ॥

व्याख्या — बिन्दौ पूर्वोक्ताहङ्कारात्मनि बिन्दौ ॥ त्रिधाभू[ते] त्रिप्रकारभूते ॥ प्रणवमयः ताररूपः स चासौ नादः श[ब्दः] तस्मिन् ॥ विकसिते उच्छूने ॥ शक्तिश्च विमर्शश्च शिवश्च प्र[का]शश्च तयोः ॥ शुभं दिव्यं ॥ किञ्चित् ईषत् ॥ स्पष्टं व्यक्तं ॥ व[पुः] शरीरं ॥ उदितवत् उत्पन्नं ॥ अतः अस्मात् ॥ सः परशि[वः] प्रकाशरूपमहेश्वरः ॥ हि निश्चयेन ॥ आकारेण रूपेण स[ह] वर्तमानः यथा तथा ॥ परमहंसः सकलजगदुच्छ्वासनिश्वासरूप[ः] अभूत् अजनिष्ट ॥ हे परकले हे विमर्शशक्ते ॥ त्वमपि च [स]देहेन शरीरेण सह वर्त्तमाना यथा तथा ॥ ह्रीश्च शोभा च श्री[श्च] कान्तिश्च (एवं ह्रीस्त्री इति भाषायां शब्दानुकरणापभ्रं[शः]) तेन युक् युता प्रकृतिः नियमरूपः स्वभावः मूलप्रकृतिः इत्यर्थ[ः] अभूः जाता ॥

## तत्र शास्त्रवचनप्रमाणम्

"शुक्लः शिवो रक्तशक्त्यां पराशाम्भववेधतः ।
रक्तशाम्भवरूपेण परातत्वेन शक्तितः ॥
रक्तः शिवः शुक्लशक्त्यां परशम्भ्वैक्यभावतः ।
रक्तः शिवः शुक्लशक्त्यां सच्चिदानन्दलक्षणः ॥" इति
आगमवचनम् ।

"हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
हकारेण वहिर्याति सकारेण विशेत् पुनः ॥" इति
श्रीसुरेन्द्रसंहितावचनम् ।

"हंसोऽहमात्मा परमार्थरूपः ॥" इति आगमवचनम् ।

"ह्रीं श्रीं स्वरूपा प्रकृतिस्त्वमाद्या ॥" इति
श्रीकुलालिकाम्नायतन्त्रवचनम् ।

"ह्रीं श्रीं स्वरूपिणी माया व्याप्ता सर्वमिदं जगत् ॥" इति
श्रीगौरीकञ्चुकीतन्त्रवचनम् ।

॥ ७ ॥

अहर्जातं बिन्दोः किल दिनकरांशाच्च रजनी
विधोरंशात्सन्ध्या जगति दहनांशात् समजनि ॥
ततोऽभूत् कालोऽसावपि परशिवो धामविभवः
परे काली कालग्रसननिरताभूस्त्वममरा ॥८॥

अन्वयः — बिन्दोः दिनकरांशात् अहः जातम् , विधोः

अंशात् च रजनी (जाता) दहनांशात् जगति सन्ध्या समजनि ततः असौ धामविभवः परशिवः अपि कालः अभूत् । (हे) परे त्वं कालग्रसननिरता अमरा काली अभूः ।

व्याख्या — बिन्दोः पूर्वोक्ताहङ्कारात्मनः बिन्दोः ॥ दिनकरस्य सूर्य्यस्य अंशात् भागात् ॥ अहः दिनं ॥ जातं उत्पन्नं ॥ किल निश्चयं ॥ विधोः चन्द्रमसः ॥ अंशात् भागात् ॥ रजनी रात्रिः ॥ जाता इति शेषः ॥ दहनांशात् अग्निभागात् ॥ सन्ध्या दिनक्षपान्तर्गतसमयः ॥ समजनि प्रादुरभूत् ॥ ततः तदनन्तरं ॥ धाम तेजःपुञ्जः एव विभवः ऐश्वर्यं यस्य सः प्रकाशरूपः इत्यर्थः परशिवः ब्रह्म ॥ अपि ॥ कालः समयकृतान्तः ॥ अभूत् आसीत् ॥ हे परे विमर्शरूपे विष्णुमाये ॥ त्वं ॥ कालस्य समयकृतान्तस्य ग्रसनं कवलनं तस्मिन् निरता अनुरक्ता समर्था इत्यर्थः ॥ अमरा मरणधर्म्मरहिता ॥ काली कालसंकलनी ॥ अभूः आसीः ॥

## तत्र शास्त्रवचनप्रमाणम्

"बैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी ।
सदाशिवेन सम्पृक्ता तत्वातीता महेश्वरी ॥
ज्योतिरूपा पराकारा तस्या देहोद्भवाः शिवे ।
किरणाश्च सहस्राश्च द्विसहस्राश्च लक्षकम् ॥
कोटिरर्बुदमेतेषां परा संख्या न विद्यते ।
तामेवानुप्रविश्यैव भाति सर्वं चराचरम् ॥
यस्या देव्या महेशानि भासा सर्वं विभासते ।
तद्भासा रहितं किञ्चिन्न च यच्च प्रकाशते ॥ —

तस्याश्च शिवशक्तेश्च चिद्रूपायाश्चितिं विना।
आन्ध्यमापद्यते नूनं जगदेतच्चराचरम्॥
तेषामनन्तकोटीनां मयूखानां महेश्वरि।
मध्ये षष्ट्युत्तरं तेऽमी त्रिशतं किरणाः शिवे॥
ब्रह्माण्डं व्यश्नुवानास्ते सोमसूर्याग्निरूपात्मना।
अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवेः॥
षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणाः शिवे।
ब्रह्माण्डं भासयन्त्येते पिण्डाण्डमपि शङ्करि॥
दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च सन्ध्ययोः।
प्रकाशयन्तः कालांस्ते तस्मात् कालात्मकास्त्रयः॥
षष्ट्युत्तरञ्च त्रिशतं दिनान्येव च हायनम्।
हायनात्मा महादेवः प्रजापतिरिति श्रुतिः॥" इति श्रीभैरवयामलतन्त्रवचनम्।

"कालसंकलनात् काली कालग्रासं करोत्यतः॥" इति श्रीकामधेनुतन्त्रवचनम्।

"या परा सा विष्णुमाया यः परः स महेश्वरः॥" इति श्रीअतिरहस्यतन्त्रवचनम्।

"सितशोणविन्दुयुगलं विविक्तशिवशक्तिसंकुचत्प्रसरम्।
वागर्थसृष्टिहेतुः परस्परानुप्रविष्टविस्पष्टम्॥
विन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः।
कामः कमनीयतया कला च दहनेन्दुविग्रहौ विन्दू॥" इति श्रीकामकलाविलासवचनम्।

॥ ८ ॥

शिखा बिन्दुः स्पष्टं नयनयुगलं बिन्दुयुगकम्
मुखं नादो यस्यागमनिगमपत्तौ च ललितौ ॥
सुकालाग्निः पार्श्वं चरणकमले शक्तिगिरिशौ
जगद्व्यापी साक्षात् स हि परमहंसो रमयति ॥ ६

अन्वयः — यस्य बिन्दुः (एव) शिखा (भवति), स्पष्टं बिन्दुयुगलं (एव) नयनयुगलं (भवति), सुकालाग्निः पार्श्वं (भवति), मुखं (एव) नादो (भवति), ललितौ आगमनिगमपत्तौ च (भवतः), शक्तिगिरिशौ (एव) चरणकमले (भवतः), स हि साक्षात् जगद्व्यापी परमहंसः रमयति ॥

व्याख्या — यस्य ॥ बिन्दुः पूर्वोक्तमिश्रबिन्दुः ॥ शिखा चूडा (भवति) ॥ स्पष्टं प्रव्यक्तं ॥ बिन्दुयुगकं पूर्वोक्तशुक्लारुणबिन्दुयुग्मं ॥ नयनयोः चक्षुषोः युगलं युग्मं (भवति) ॥ नादः पूर्वोक्तश्रृङ्गाटकरूपनादः ॥ मुखं वक्त्रं (भवति) ॥ ललितौ सुन्दरौ ॥ आगमश्च तन्त्रशास्त्रश्च निगमश्च वेदशास्त्रश्च तौ एव पत्तौ गदतो च (भवतः) ॥ सुकालाग्निः कालदहनः ॥ पार्श्वं पार्श्वयुगलं (भवति) ॥ शक्तिश्च विमर्शश्च गिरिशः प्रकाशश्च तौ ॥ चरणौ पादौ एव कमले पद्मे (भवतः) शेषः) ॥ स हि स एव ॥ परमहंसः सकलजीवात्मकः अजपा गायत्रीरूपोच्छ्वासनिःश्वासात्मकः इत्यर्थः ॥ रमयति क्रीडति बहुलमेतन्निदर्शनमिति गणसूत्रस्य नवगणी पठितेभ्यो "रामो राज्यमचीकरत्" इत्यादिवत् क्वचित् स्वार्थे णि भवति इति व्याख्यानात् अत्रापि स्वार्थे णिच् ।

अन्वयः — हे भगवति जननि मन्मथकले ! मिश्रः बिन्दु (एव) तव मुखं (अस्ति), अरुणधवलं बिन्दुयुगकं हि (तव) कुचद्वन्द्वं (अस्ति), ते योनिः हार्द्धसुकला च (अस्ति) । (यत्) तव आस्यं (तत्) सुसाम (अस्ति), यत् ते स्तनयुगं (तत्) ऋग्यजुरुभयकं (अस्ति) । ततः तव योनिः अथर्वः (अस्ति) ।

व्याख्या — हे भगवति षडैश्वर्यवति ! जननि मातः मन्मथकले कामकले ! मिश्रः बिन्दुः सूर्यबिन्दुः ॥ तव ते ॥ मुखं वक्त्रं (अस्ति) ॥ अरुणधवलं बिन्दुयुगकम् अग्नीषोमबिन्दुयुग्मं ॥ हि ॥ (ते) कुचद्वन्द्वं स्तनयुगलं (अस्ति) ॥ ते योनि भगं ॥ हार्द्धसुकला हार्द्धं कला सा च सुकमुखार्द्धेव्यक्ततया अस्ति इति शेषः ॥ (एवं) यत् (तव) आस्यं मुखं ॥ तत् सुसाम सामवेदः (अस्ति) ॥ (यत्) ते तव ॥ स्तनयुगं कुचद्वयं ॥ (तत्) ऋग् ऋग्वेदश्च यजुः यजुर्वेदश्च तयोः उभयकं युग्मं (अस्ति) ॥ ततः तदनन्तरं ॥ तव ते ॥ योनिः भगं ॥ अथर्वः अथर्ववेदः ॥ अस्ति इति शेषः ॥ तस्मात् कारणात् परदेवतात्रि-बिन्दुचतुर्वेदानां भेदो नास्ति इति सारांशः ॥ योनिरेव त्रिकोणम् इत्यभिप्रायः ।

## तत्र शास्त्रवचनप्रमाणम्

"एकारोद्र्ध्वगतो बिन्दुर्मुखं भानुरधोगतम् ।
स्तनौ दहनशीतांशू योनिर्हार्द्धकला भवेत् ॥
बिन्दुं सङ्कल्प्य वक्त्रन्तु तदधस्तात् कुचद्वयम् ।
तदधः सपरार्द्धन्तु चिन्तयेत्तदधोमुखम् ॥" इति

"अग्रबिन्दुपरिकल्पिताननामन्यबिन्दुरचितस्तनद्वयीम् ।
नादबिन्दुरचनागुणास्पदां नौमि ते परशिवे परां कलाम् ॥"
इति च आगमवचनम् ।

"मुखं विन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हकारार्द्धं ध्यायेद् हरमहिषि ते मन्मथकलाम् ।
स सद्यः संक्षोभं नयति वनिता इत्यति लघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥" इति
श्रीशंकराचार्यवचनम् ।

॥ १० ॥

ततः संसारेऽस्मिन् गगनमतुलं शब्दगुणकं
पुनः स्पर्शावेद्यं पवनमपि रूपञ्च दहनम् ॥
रसाढ्यं पानीयं तदनु धरणीं गन्धगुणकाम्
सुनादब्रह्माख्यौ प्रकृतिपुरुषौ प्राजनयताम् ॥११॥

॥ अन्वयः — ततः अस्मिन् संसारे सुनादब्रह्माख्यौ प्रकृतिपुरुषौ शब्दगुणकं अतुलं गगनम्, पुनः स्पर्शावेद्यं पवनं अपि, रूपं दहनं च, रसाढ्यं पानीयं, तदनु गन्धगुणकां धरणीं प्राजनयताम् ॥

व्याख्या — ततः तदनन्तरं ॥ अस्मिन् एतस्मिन् ॥ संसारे संसृतौ ॥ सुनादब्रह्माख्यौ पूर्वोक्तकामकलात्मकविसर्गबिन्दुरूपौ ॥ प्रकृतिपुरुषौ विमर्शप्रकाशौ ॥ शब्दः गुणो यस्य तत् श्रोत्रग्राह्यगुणयुक्तं ॥ अतुलं महत् ॥ गगनं नभः ॥ पुनः भूयः ॥ स्पर्शेन स्पर्शगुणेन आवेद्यः ज्ञेयः तं ॥ पवनं अनिलं ॥ रूपं रूपगुणयुक्तं ॥ दहनं तेजः ॥ च ॥ रसेन रसगुणेन आढ्यं पूर्णं ॥ पानीयं जलं ॥ तदनु ततः ॥ गन्धगुणकां घ्राणग्राह्यगुणयुक्तां ॥ धरणीं भूमिं ॥ प्राजनयतां (पूर्वोक्तबिन्दुमथनरूपताण्डवलीलया) जनितवन्तौ ।

## तत्र शास्त्रवचनप्रमाणम्

"स्फुरितारुणाद्बिन्दोर्नादब्रह्मांकुरो रवौ व्यक्तः।
तस्माद्गगनसमीरणदहनोदकभूमिवर्णसम्भूतिः॥
अथ विशदादपि बिन्दोर्गगनानिलानलवारिभूमिजनिः।
एतत् पञ्चकविकृतिर्जगदिदमराबाद्यजाण्डपर्यन्तम्॥" इति
॥ ६ ॥
श्रीकामकलाविलासवचनम्

"शब्दस्पर्शौ रूपरसौ गन्धो भूतगणा इमे।
एक द्वि त्रि चतुः पञ्च गुणा व्योमादिषु क्रमात्॥" इति
श्रीपञ्चदशीवचनम्।

॥ ११ ॥

॥ विमर्शाख्ये शक्ते भवसि हि परा त्वं क्षितितले
महेच्छा पश्यन्ती मणिपुरगवामा भगवति।
तथा ज्येष्ठा ज्ञाना हृदयगमना मध्यमशिवा
क्रियाशक्ती रौद्री मुखकुहरगा वैखरिकला ॥१२

॥ अन्वयः — हे भगवति! विमर्शाख्ये! शक्ते! त्वं
क्षितितले परा भवसि। मणिपुरगवामा महेच्छा पश्यन्ती
(भवसि)। तथा हृदयगमना ज्ञाना ज्येष्ठा मध्यमशि(वा)
(भवसि)। मुखकुहरगा क्रियाशक्तिः रौद्री वैखरिकला (भवसि)

व्याख्या — हे भगवति विमर्शाख्ये शक्ते! (शब्दोच्चार
समये)॥ त्वं हि (एका एव)॥ (यदा) क्षितितले मूलाधार
(स्फुरसि इति शेषः) ॥ (तदा) परा परासंज्ञका नादो
भवसि जायसे ॥ (तथैव) मणिः मणिपूरकाभिधं ... ॥ पु

तस्मिन् नाभिचक्रे गच्छति या सा नाभिस्थानप्राप्ता सा चासौ वामा ॥ महेच्छा इच्छाशक्तिः (भूत्वा) ॥ पश्यन्ती तन्नाम्नी ॥ (भवसि) ॥ तथा तथैव हृदये गमनं यस्या सा हृदयप्राप्ता ॥ ज्ञाना ज्ञानशक्तिः ज्येष्ठा ॥ (भूत्वा) ॥ मध्यमा चासौ शिवा मध्यमा इति नाम्नी ॥ (भवसि) ॥ (तथैव) मुखस्य वदनस्य कुहरं विवरं तस्मिन् गच्छति या सा मुखविवरप्राप्ता ॥ क्रियाशक्तिः (भूत्वा) ॥ रौद्री ॥ वैखरी एव वैखरिका तस्याः भावः वैखरिकता वैखरीतिनामधेया ॥ भवसि इति शेषः ॥

## तत्र शास्त्रवचनप्रमाणम्

"इच्छाशक्तिस्तदा सेयं पश्यन्ती वपुषा स्थिता ।
ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता ॥
ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा ।
तत्संहृतिदशायान्तु वैन्दवं रूपमास्थिता ॥
प्रत्यावृत्तिक्रमेणैव शृङ्गाटवपुरुज्ज्वला ।
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ॥" इति

श्रीवामकेश्वरतन्त्रवचनम् ।

॥ १२ ॥

पुरोक्तेच्छाशक्तिस्त्रिपुरललिता हादिमतगा
महोग्रा ज्ञानाख्या जगति विदिता सादिमतगा ॥
क्रियाशक्तिः काली कलननिरता कादिमतगा
परे एकैव त्वं जयसि मतभेदैस्त्रिपुरयुक् ॥ १३ ॥

अन्वयः — हे परे ! त्वं एका एव पुरोक्ता इच्छाशक्तिः (सती) हादिमतगा त्रिपुरललिता (भूत्वा), ज्ञानाख्या (सती)

जगति विदिता सादिमतगा महोग्रा (भूत्वा), क्रियाशक्ति (सती) कादिमतगा कलननिरता काली (भूत्वा), (एवं) मतभेदै त्रिपुरयुक् जयसि ॥

व्याख्या — हे परे! त्वं ॥ एका केवला एव ॥ पुर पूर्वं ॥ उक्ता कथिता ॥ इच्छाशक्तिः (यदा इच्छारूपिणी भवसि तदा इत्यर्थः) ॥ हादिमतगा हादिक्रमसमष्टिरूपिणी ॥ त्रिपुर ललिता त्रिपुरसुन्दरी ॥ भवसि ॥ ज्ञानाख्या ज्ञानशक्तिः (यद ज्ञानरूपिणी भवसि तदा इत्यर्थः) ॥ जगति लोके ॥ विदित ज्ञाता ॥ महाचीनक्रमयुतसंवरौघिमतेन प्रसिद्धा इत्यर्थः सादिमतगा सादिक्रमसमष्टिरूपिणी ॥ महोग्रा महोग्रतारा (भवसि) ॥ क्रियाशक्तिः (यदा क्रियारूपिणी भवसि तद इत्यर्थः) ॥ कलने स्थितिकरणे निरता तत्परा "कालसंकल नात् काली" इत्यभिप्रायः ॥ काली (भवसि) ॥ एवंमतभेदै कादि सादि हादि क्रमभेदैः ॥ त्रीणि च तानि पुराणि शरीराणि तैः युक् युक्ता ॥ जयसि सर्वोत्कर्षेण वर्त्तसे ॥

## तत्र शास्त्रवचनप्रमाणम्

"कालसंकलनात् काली कालग्रासं करोत्यतः ॥" इति
श्रीकामधेनुतन्त्रवचनम् ।

"ब्राह्मी रौद्री वैष्णवीति शक्तयस्तिस्र एव हि ।
पुरं शरीरं यस्याः सा त्रिपुरेति प्रकीर्तिता ॥" इति
श्रीसुन्दरीस्तववचनम् ।

"उग्राऽऽपत्तारिणी यस्मादुग्रतारा प्रकीर्तिता ॥" इति
श्रीमत्स्यसूक्तवचनम् ।

"सुन्दरी तारिणी काली क्रमदीक्षाभिगामिनी ।
क्रमदीक्षायुतो देवि क्रमाच्छम्भुर्भविष्यति ॥

सुन्दरी हादि विद्या च सादि विद्या च तारिणी ।
कादि विद्या गुह्यकाली मतत्रयविभिन्नता ॥
प्रकारनवकैर्भिन्ना क्रमदीक्षाविमुक्तिदा ।
विद्याक्रमं तथाकाद्याम्नायोक्तक्रमगं शिवे ॥
हाद्याम्नायोक्तक्रमं हादिपंचक्रमं तथा ।
कादिनवक्रमञ्चैव हादिनवक्रमं तथा ॥
सादिक्रमं संवरौधिमतं चीनसमुद्भवम् ।
महाक्रमं तथा पूर्णक्रमं सर्वोत्तमोत्तमम् ॥
गुह्याद्गुह्यतरं सर्वक्रमदीक्षाविधिं शृणु ।
सर्वाम्नायप्रभेदेन षड्धाविद्याक्रमं स्मृतम् ॥" इति
श्रीबृहद्वडवानलतन्त्रवचनम् ।

"कादिकालीतिशक्ती स्तः पुरा तत्तन्मते मया ।
प्रोक्ते तन्त्रे कादिकालीमताख्ये तेन नामतः ॥" इति
श्रीतन्त्रराजवचनम् ।

"सुन्दरी तारिणी काली क्रमदीक्षाभिगामिनी ।
क्रमपूर्णो महेशानि क्रमाच्छम्भुर्भविष्यति ॥
चन्द्राग्निपक्षषोढाख्यपरानिर्वाणतत्परा ।
षट्शाम्भवं ततो देवि चक्रसंभेदमेव च ॥
स्वचक्रदेहविज्ञानं परकायप्रवेशनम् ।
एतज्ज्ञानाद् भवेन्मेधा दीक्षा प्रोक्ता मया तव ॥
हादाविदं निगदितं शृणुकादौ महेश्वरि ।" इति
श्रीशक्तिसङ्गमतन्त्रवचनम् ।

॥ १३ ॥

त्रिविद्यानां नूनं खपवनकृशान्वब्वसुमती—
समेतानां जातास्तनव इह षड्धा भुवनगाः ॥

प्रजातं षट्चक्रं शुभमपि सहस्रारसहितम्
षडाम्नायात्मा त्वं रसतनुधराऽभूर्हि ललिते ॥ १४ ॥

अन्वयः — हे ललिते ! इह खपवनकृशान्वव्वसुमत
समेतानां त्रिविद्यानां भुवनगाः षड्धाः तनवः नूनं जाताः
सहस्रारसहितं शुभं षट् चक्रं अपि प्रजातम् । त्वं हि रसतनु
धरा षडाम्नायात्मा अभूः ॥

व्याख्या — हे ललिते ब्रह्मस्वरूपिणिशक्ते ! इ
अस्मिन् जगति ॥ खञ्च गगनञ्च पवनश्च वायुश्च कृशानुश्
तेजश्च आपश्च जलानि च वसुमती भूश्च ताभिः समेतान
युक्तानां ॥ त्रिविद्यानां कादिहादिसादिविद्यानां ॥ भुवं
गच्छन्तीति भुवनगाः जगद्व्याप्ताः ॥ षड्धा षट्प्रकाराः
तनवः मूर्त्तयः ॥ नूनं ध्रुवं जाताः ॥ षडाम्नायविद्याः जाताः
सहस्रारेण सहस्रदलचक्रेण सहितं युक्तम् सहस्राराधिकम्
शुभं शोभनं ॥ षण्णां चक्राणां समाहारः षट्चक्रं मूलाधार
स्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यषट्चक्रम् ॥ अपि
(खपवनकृशान्वव्वसुमतीसमेताभ्यः त्रिविद्याभ्यः) प्रजातं उत्प
न्नम् ॥ (ततः) त्वं ॥ हि निश्चयेन ॥ रसाः षड् च ताः तनव
शरीराणि तासां धरा धारणकर्त्री ॥ षडाम्नायात्मा षडाम्नाय
रूपा ॥ अभूः ॥

## तत्र शास्त्रवचनप्रमाणम्

"एका सा परमादेवी विश्वं व्याप्य व्यवस्थिता ।
चतुर्विंशतितत्त्वेन ब्रह्माण्डं चेतयेदिह ॥
पृथिवीवायुराकाशजलवह्निमयं वपुः ।
धृत्वा संसृज्यते विश्वं कल्पे कल्पे यथेच्छया ॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
पञ्चभूतात्मकं चैव शरीरपञ्चसंस्कृतम् ॥
एकीकृत्य तथा पञ्चभूतरूपेण संस्थिताः ।
निर्जीवाः जीवरूपेण पञ्चभूतत्वमागताः ॥
सिंहासनमहाम्नाय पञ्चभूतानिसङ्गमः ।
आद्या सा परमा शक्तिर्व्योमस्था कुलरक्षिणी ॥
ब्रह्माण्डव्यापिनी नित्या परब्रह्मस्वरूपिणी ।
चतुर्विंशतिभिस्तत्वैः सर्वजीवस्वरूपिणी ॥
ब्रह्मस्वरूपिणी साक्षात् स्त्रीपुंभेदेन भिद्यते ।
लीलया क्रीडते नित्या ललितारूपधारिणी ॥
अरूपा रूपवान् भूत्वा पुंरूपं धार्य्यते शिवे ।
कदाचिल्लीलया देवी मायारूपेण क्रीडति ॥
कदाचिद्धरिरूपेण शिवरूपेण स्वेच्छया ।
ब्रह्मरूपधरा माया ह्येच्छारूपधरा परा ॥
एषा परापरादेवी प्रकृतिर्विश्वमोहिनी ।
प्रवर्तयति संसारं समयापालनाय च ॥
श्रीनाथक्रमसिद्ध्यर्थं षडाम्नायत्वमागता ।
षट्सिंहासनगां देवीं समासं कथयामि ते ॥" इति
श्रीपरातन्त्रवचनम् ।

॥ १४ ॥

परे एका सृष्टिस्थितिलयविधाने पुनरहो
अनाख्या भाषायां त्वमसि ललनाचारनिरता ॥
समालभ्यावस्थां विविधमतभेदोपजनितां
शनैः पञ्चीभूत्वा विलसासि सदैव त्रिभुवने ॥१५॥

अन्वयः — हे परे! अहो! त्वं एका (एव) सृष्टिस्थि
लयविधाने पुनः अनाख्याभाषायां ललनाचारनिरता असि
(एवं) विविधमतभेदोपजनितां अवस्थां समालभ्य शनैः पञ्च
भूत्वा त्रिभुवने सदैव विलषसि ॥

व्याख्या — हे परे! अहो! त्वं एका केवला ॥ सृष्टि
सर्गश्च स्थितिश्च पालनञ्च लयश्च संहारश्च तदेव विधा
कार्यं तस्मिन् ॥ पुनः भूयः ॥ अनाख्या या तिरोधानेन सहित
चासौ भाषा अनुग्रहणं तस्यां शाकपार्थिवादित्वं कल्पनीयं
ललनायाः क्रीडायाः आचारः तस्मिन् निरता ॥ असि भवसि
(एवं) ॥ विविधैः पूर्वोक्तसृष्टिस्थितिसंहारानाख्या भाषाभि
मतभेदैः ॥ उपजनितां प्रापितां ॥ अवस्थां अवस्थितिं ॥ समा
लभ्य संप्राप्य ॥ शनैः क्रमेण ॥ अपञ्च पञ्च यथा संपद्यन्
तथा भूत्वा ॥ त्रिभुवने त्रिलोके ॥ सदैव सर्वदा ॥ विलषसि
विभासि ॥

## तत्र शास्त्रवचनप्रमाणम्

"सृष्टेरादौ त्वमेकाऽऽसीत् तमोरूपमगोचरम् ।
त्वत्तो जातं जगत् सर्वं परब्रह्मसिसृक्षया ॥
महत्तत्वादिभूतान्तं त्वया सृष्टमिदं जगत् ।
निमित्तमात्रं तद्ब्रह्म सर्वकारणकारणम् ॥
सद्रूपं सर्वतो व्यापि सर्वमावृत्य तिष्ठति ।
सदैकरूपं चिन्मात्रं निर्लिप्तं सर्ववस्तुषु ॥
न करोति न चाऽश्नाति न गच्छति न तिष्ठति ।
सत्यं ज्ञानमनाद्यन्तमवाङ्मनसगोचरम् ॥
तदिच्छामात्रमालम्ब्य त्वं महायोगिनी परा ।
करोषि पासि हंस्यन्ते जगदेतच्चराचरम् ॥

तव रूपं महाकालो जगत्संहारकारकः ।
महासंहारसमये कालः सर्वं ग्रसिष्यति ॥
कलनात् सर्वभूतानां महाकालः प्रकीर्तितः ।
महाकालस्य कलनात् त्वमाद्या कालिका परा ॥
कालसंग्रसनात् काली सर्वेषामादिरूपिणी ।
कालत्वादादिभूतत्वादाद्या कालीति गीयते ॥
पुनः स्वरूपमासाद्य तमोरूपं निराकृतिः ।
वाचातीतं मनोगम्यं त्वमेकैवाऽवशिष्यसे ॥
साकाराऽपि निराकारा मायया बहुरूपिणी ।
त्वं सर्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका ॥" इति
श्रीमहानिर्वाणतन्त्रवचनम् ।

॥ १५ ॥

रसारं तद्बाह्ये शुभवसुदलाढ्यं सुकमलं
सरोजान्त्यं दिव्यं विधुदलयुतं तद्बहिरथो ॥
चतुर्द्वारोपेतं विलषति यदा यन्त्रमतुलं
तदा त्वं भोः मातर्भवसि भुवनेशी हरनुते ॥१६॥

अन्वयः — भोः हरनुते मातः ! यदा रसारं तद्बाह्ये शुभवसुदलाढ्यं सुकमलं तद्बहिः विधुदलयुतं दिव्यं सरोजान्त्यं अथो चतुर्द्वारोपेतं अतुलं यन्त्रं विलषति । तदा त्वं भुवनेशी भवसि ॥

व्याख्या — भोः हरनुते शिवनमिते ! मातः जननि ! यदा यस्मिन् समये ॥ रसारं षट्कोणं ॥ तद्बाह्ये तद्बहिः ॥ शुभवसुदलाढ्यं रुचिराष्टदलयुतं ॥ सुकमलं पद्मं ॥ तद्बहिः

तद्बाह्ये ॥ विधुदलयुतं षोडशपत्रयुतं ॥ दिव्यं सरोजान्यं अपरं कमलं ॥ अथो तद्बाह्ये ॥ चतुर्द्वारोपेतं भूपुरयुतं ॥ अतुलं उत्तमं ॥ यन्त्रं चक्रं ॥ विलसति ॥ पूर्वोक्तबिन्दुयुगलस्य उच्छूनात् एतादृशं यन्त्ररूपं भवति इत्यर्थः ॥ तदा तस्मिन् समये त्वं ॥ भुवनेशी भुवनेश्वरीरूपा भवसि ॥ तस्मात् कारणात् मूर्तियन्त्रयोर्भेदो नास्ति इत्याशयः ॥ एतद्यन्त्रस्य अष्टदल षोडशदलभूपुरचक्राणि श्वेतबिन्दुभागाः भवन्ति ॥ षट्कोण चक्रं च रक्तबिन्दुभागो भवति ॥ बिन्दुयुगलात् सृष्टिर्भवति, तस्मात् कारणात् सृष्ट्याम्नाययन्त्रे बिन्दुद्वयभागा एव भवन्ति ॥ यतः सकलपूर्वाम्नायात्मकचक्राणां पद्मभूपुरादिकाः श्वेतबिन्दुभागाः कोणादिकाः रक्तबिन्दुभागाः भवन्ति ॥ इति यन्त्रसंकेतः ॥

## तत्र शास्त्रवचनप्रमाणम्

"पद्ममष्टदलं वाह्ये वृत्तं षोडशभिर्दलैः ।
विलिखेत्कर्णिकामध्ये षट्कोणमतिसुन्दरम् ॥
चतुरस्रं चतुर्द्वारमेव मण्डलमालिखेत् ।
एवं श्रीभुवनेश्वर्या यन्त्रराजो भवेच्छिवे ॥" इति

श्रीभुवनेश्वरीतन्त्रवचनम् ।

॥ १६ ॥

परे प्रागाम्नाये जगति विदिता राजसवपुः
शुभाकारा भूत्वा सृजसि भुवना विश्वमखिलम् ॥
तदा शम्भ्वाकारो भवति स परो धामविभव-
स्तयोरंशोत्पन्नो विधिरपि स सृष्टिं वितनुते ॥ १७ ॥

अन्वयः — हे परे! प्रागाम्नाये (त्वं) जगति विदिता शुभाकारा राजसवपुः भुवना भूत्वा अखिलं विश्वं सृजसि, तदा सः धामविभवः परः शम्भ्वाकारः भवति। तयोः अंशोत्पन्नः सः विधिः अपि सृष्टिं वितनुते॥

व्याख्या — हे परे! प्रागाम्नाये पूर्वाम्नाये॥ जगति लोके॥ विदिता प्रसिद्धा॥ शुभः शोभनः आकारः आकृतिः यस्याः सा॥ राजसम् वपुः शरीरं यस्याः सा रजोगुणयुक्तशरीरा॥ भुवना भुवनेश्वरीरूपा॥ भूत्वा॥ अखिलं निखिलं॥ विश्वं जगत्॥ सृजसि सर्गं करोषि॥ तदा तस्मिन् काले॥ धामविभवः तेजःपुञ्जरूपः॥ स परः॥ शम्भ्वाकारः पशुपतिरूपः॥ भवति॥ तयोः भुवनेश्वरीपशुपत्योः अंशात् उत्पन्नः अंशजातः॥ सः॥ विधिः ब्रह्मा॥ अपि॥ सृष्टिं सर्गं॥ वितनुते करोति॥

## तत्र शास्त्रवचनप्रमाणम्

"त्वं तु कापालिनी भूत्वा मामपृच्छः षडन्वयम्।
प्रथमं पूर्ववक्त्रेण रूपं तत्पुरुषेण च॥
कथयामास प्राची तु सिंहासनमहोद्गतम्।
नायिका रुद्रशक्तिर्या शिवतत्पुरुषं परम्॥" इति
श्रीपरातन्त्रवचनम्।

"पूर्वाम्नायः सृष्टिरूपः स्थितिरूपश्च दक्षिणः।
संहारः पश्चिमो देवि उत्तरोऽनुग्रहो भवेत्॥" इति
श्रीकुलार्णवतन्त्रवचनम्।

"एकैवाऽऽद्या जगत्सूतिः सच्चिदानन्दविग्रहा।
तत्तद्विभूतिभेदेन भिन्नाऽनेकत्वमागता॥

पूर्णेशी भुवनेशानी ललिता चाऽपराजिता ।
लक्ष्मीः सरस्वती वाणी पारिजातपदाङ्किता ॥
अन्नपूर्णा जयाद्याश्च पूर्वाम्नाय समाश्रिताः ।" इति
श्रीवडवानलतन्त्रवचनम् ।

॥ १७ ॥

सुपूर्वे राजीवे स्मितमुखसरोजां पृथुकुचां
शिवाकारां शान्तां तरुणरविभासं हरवधूम् ॥
कराम्भोजैः पाशांकुशवरमहाभीतिदधतीम्
भजेऽहं रत्नाङ्गीं शशधरधरां रम्यभुवनाम् ॥१८॥

अन्वयः — सुपूर्वे राजीवे स्मितमुखसरोजां पृथुकुचां शिवाकारां शान्तां तरुणरविभासं हरवधूं कराम्भोजैः पाशांकुशवरमहाभीतिदधतीं रत्नाङ्गीं शशधरधरां रम्यभुवनां अहं भजे ॥

व्याख्या — सुपूर्वे राजीवे पद्मे पूर्वाम्नाये ॥ स्मितं ईषद्धास्ययुक्तं मुखं आननं सरोजं कमलमिव यस्याः सा तां ॥ पृथु विशालौ कुचौ स्तनौ यस्याः सा ताम् ॥ शिवं एव कल्याणं तदेव आकारः आकृतिः यस्याः सा ताम् ॥ शान्तां सौम्यां ॥ तरुणः युवा स चासौ रविः सूर्यः तस्य भा इव भाः कान्तिर्यस्याः सा तां ॥ हरस्य पशुपतेः वधूः प्रिया तां ॥ कराः हस्ताः एव अम्भोजानि कमलानि तैः ॥ पाशश्च रज्जुबन्धनं च अंकुशश्च सृणिश्च वरं च वरदमुद्रा च महाभीतिः अभयमुद्रा च ताः दधतीं दधानां ॥ रत्नानि रत्नखचितभूषणानि अङ्गेषु करचरणादिषु यस्याः सा तां ॥ शशधरधरां चन्द्रशेखरां ॥ रम्या रुचिरा चासौ भुवना भुवनेश्वरी तां ॥ अहं भजे सेवे ॥

त्रिगुणाभावे — स्मितमुखसरोजां नित्यानन्दरूपिणीं ॥ पृथुकुचां बिन्दुद्वयेन सृजतीति पूर्वमेवोक्तं तस्मात् अत्र पृथुकुचद्वयेन महादेवीं संसाररचनोद्यतामिति सूचितम् ॥ शिवाकारां सकलजगतां कल्याणरूपिणीं ॥ शान्तां सकलजगतां शान्तिदायिनीं ॥ यथा तरुणरविः नूतनदिवसं सृजति, तथैव पूर्वाम्नायात्मिका भगवती नूतनसंसारं सृजति तस्मात् तरुणरविभासं विश्वकर्त्रीमित्यर्थः ॥ हरवधू तापत्रयं हरतीति हरः तस्य वधूः शक्तिः स्वीयसाधकानां तापत्रयहारिणीमित्यर्थः ॥ पाशः वशीकरणशक्तिः अंकुशं स्तम्भनशक्तिः तस्मात् पाशांकुशवरमहाभीतिदधतीं सकलभुवनं निजमायावशमानीय तदिच्छां विना चलनासंभवात् स्वीयसाधकानामभिलषितवरं दत्वा तेभ्योऽभयं ददतीमिति भावः ॥ रत्नानि एव राजसचिह्नानि रत्नाङ्गीं रजोगुणात्मिकामिति भावः ॥ शशधरधरां परमामृतरूपिणीं ॥ रम्या मनोहरा चासौ भुवना (भुवन + आप) तां सकलभुवनशक्तिं मूलप्रकृतिमितिभावः ॥

## तत्र शास्त्रवचनप्रमाणम्

"उद्यद्दिनद्युतिमिन्दुकिरीटां
तुङ्गकुचां नयनत्रययुक्ताम् ॥
स्मेरमुखीं वरदांकुशपाशा—
भीतिकरां प्रभजे भुवनेशीम् ॥" इति
आगमवचनम् ।

॥ १९ ॥

त्रिकोणं वृत्तयुतं त्रयमपि वहिस्त्र्यस्त्रमपरं
वहिः पद्मं दिव्यं वसुदलयुतं मत्सदनम् ॥

शिरःपंक्तिज्वालैः सह भवति यन्त्रं सुविमलम्
तदा श्यामाकाली त्वमसि परमाद्ये भगवति ॥ १९

अन्वयः — हे परमाद्ये भगवति ! त्रिकोणं वह्न्यस्त्र अपि वहिः अपरं त्र्यस्त्रं, वहिः वसुदलयुतं दिव्यं पद्मं भूमिसदनं शिरःपंक्तिज्वालैः सह सुविमलं यन्त्रं यदा भवति तदा त्वं श्यामा काली असि ॥

व्याख्या — हे परमाद्ये भगवति ! त्रिकोणं त्र्यस्त्रं वह्न्यस्त्रत्रयं त्रिकोणत्रयं ॥ अपि ॥ वहिः तद्बाह्ये ॥ अपरं अन्यत् ॥ त्र्यस्त्रं त्रिकोणं ॥ (एवं पञ्चत्रिकोणमित्यर्थः) ॥ वहिः तद्बाह्ये ॥ वसुदलयुतं अष्टपत्रयुक्तं ॥ दिव्यं रुचिरं ॥ पद्मं कमलं ॥ (तद्बाह्ये) ॥ भूमिसदनं भूपुरं ॥ शिरःपंक्तिः च मुण्डपंक्तिः च ज्वालाश्च अग्निशिखाश्च तैः सह वर्तमानमिति शेषः ॥ सुविमलं निर्मलं ॥ यन्त्रं चक्रं ॥ भवति (यदा पूर्वोक्तविन्दुत्रयं एतद्रूपतां याति इत्यर्थः) ॥ तदा ॥ त्वं ॥ श्यामाकाली दक्षिणकालीरूपिणी ॥ असि भवसि ॥ एतद्यन्त्रस्य पंचत्रिकोणानि रक्तविन्दुभागाः अष्टपत्रकमलं च श्वेतविन्दुभागाः भूपुराग्निज्वालामुण्डपंक्तयश्च मिश्रविन्दुभागाः भवन्ति ॥ पूर्वोक्तविन्दुत्रयात् स्थितिर्भवति ॥ तस्मात् कारणात् स्थित्याम्नाययन्त्रे विन्दुत्रयभागाः भवन्ति ॥ यतः सकलदक्षिणाम्नायचक्राणां पद्मादिकाः श्वेतविन्दुभागाः कोणादिकाः रक्तविन्दुभागाः अन्ये भूपुरादिकाः मिश्रविन्दुभागाश्च भवन्ति ॥ इति यन्त्रसंकेतः ॥ मतान्तरे कालीयन्त्रं मायागर्भितविन्दु पञ्चत्रिकोणषट्कोणवृत्ताष्टदलवृत्तभूपुरान्वितं च भवति ॥

## तत्र शास्त्रवचनप्रमाणम्

"त्रिकोणं पञ्चकं चाष्टकमलं भूपुरान्वितम् ।
मुण्डपंक्तिश्च ज्वालाश्च कालीयन्त्रं सुसिद्धिदम् ॥" इति
आगमवचनम् ।

"आदौ त्रिकोणं विन्यस्य त्रिकोणं तद्बहिर्न्यसेत् ।
ततो वै विलिखेन्मन्त्री त्रिकोणत्रयमुत्तमम् ॥
मध्ये तु वैन्दवं चक्रं बीजमायाविभूषितम् ।
षट्कोणात्तु वहिर्वृत्तं ततोऽष्टदलकं न्यसेत् ॥
वहिर्वृत्तेन संयुक्तं भूपुरेणैव संयुतम् ।
ज्ञात्वैव मुक्तिमाप्नोति यन्त्रराजं न संशयः ॥" इति
कालीतन्त्रवचनम् ।

॥ १९ ॥

ततोऽवाच्याम्नाये त्वमपि परमे सत्वगुणका
महाश्यामा भूत्वा निखिलभुवनं रक्षसि सदा ॥
महाकालाकारः प्रभवति तदा श्रीपरशिव-
स्तयोरंशोत्पन्नो भरति च जगद्विष्णुरखिलम् ॥२०॥

अन्वयः — हे परमे ! ततः अवाचीआम्नाये अपि त्वं सत्वगुणका महाश्यामा भूत्वा निखिलभुवनं सदा रक्षसि ॥ तदा श्रीपरशिवः महाकालाकारः प्रभवति । तयोः अंशोत्पन्नः विष्णुः च अखिलं जगत् भरति ॥

व्याख्या — हे परमे ! ततः तदनन्तरं ॥ अवाचि आम्नाये दक्षिणाम्नाये ॥ अपि ॥ त्वं ॥ सत्वगुणका सत्वगुण-

युक्ता ॥ महाश्यामा दक्षिणकालीरूपा ॥ भूत्वा ॥ निखिलं सर्वं च तत् भुवनं लोकं ॥ त्वमसि पालयसि ॥ तदा तस्मिन् समये ॥ श्री परशिवः प्रकाशैकस्वरूपः ॥ महाकालाकारः महाप्रेत भैरवस्वरूपः ॥ प्रभवति जायते ॥ तयोः दक्षिणकालीमहाकालयोः ॥ अंशात्पन्नः अंशजातः ॥ विष्णुः विश्वम्भरः ॥ च ॥ अखिलं सर्वं ॥ जगत् भुवनं ॥ भरति पालयति ॥

## ॥ तत्र शास्त्रवचनप्रमाणम्

"दक्षिणाम्नायं वक्ष्यामि महावीर्य्या महोल्वणा ।
अघोरभैरवोद्दिष्टा निशेशी च निराञ्जना ॥" इति
श्रीपरातन्त्रवचनम् ।

"निशेशी दक्षिणा काली वगला छिन्नमस्तका ।
भद्रा तारा च मातङ्गी दक्षिणाम्नायदेवताः ॥" इति
श्रीवडवानलतन्त्रवचनम् ।

॥ २० ॥

अवाच्यञ्जे नौमि स्मरहरशवस्थां त्रिनयनां
महाश्यामांकालीं जलधरनिभां मुक्तचिकुराम् ॥
ललज्जिह्वां नग्नां शवकरपरीधानसुकटिं
नृमुण्डं खड्गञ्चाभयमपिवरञ्चैव दधतीम् ॥२१॥

॥ अन्वयः ॥ — अवाचि अञ्जे स्मरहरशवस्थां त्रिनयनां जलधरनिभां मुक्तचिकुरां ललज्जिह्वां नग्नां शवकरपरीधान-सुकटिं नृमुण्डं खड्गं च अभयं वरं च एव दधतीं महाश्यामा-कालीं नौमि ॥

व्याख्या —अथ चिरञ्जीव अर्जुन ! दक्षिणाम्नाये । स्मरहरः शिवः स एव शवः प्रेतः तस्मिन् तिष्ठति या सा । त्रीणि नयनानि नेत्राणि यस्याः सा तां ॥ जलधरो मेघः तेन निभा तुल्या तां ॥ मुक्ताः विकीर्णाः चिकुराः केशाः यस्याः सा तां ॥ ललन्ती चलन्ती जिह्वा रसना यस्याः सा तां ॥ नग्नां दिग्वस्त्रां ॥ शवानां मृतकानां कराः हस्ताः ते एव परीधानं परीधानवस्त्रं तेन सुशोभना कटिः यस्याः तां ॥ नृमुण्डं नरशिरः ॥ खड्गं कौक्षेयकं ॥ अभयं अभयमुद्रां ॥ वरं वरदमुद्रां ॥ अपि ॥ दधतीं बिभ्रतीं ॥ महाश्यामा काली दक्षिणकाली ॥ त्वां ॥ नौमि प्रणमामि ॥

निर्गुणभावार्थ —स्मरहरशवस्थां स्मरहरः कामनाशकः स एव शवः तस्योपरि तस्य सत्तारूपेण स्थितां स्वीयसाधकानां कामक्रोधादिविनाशशक्तिरूपामित्यर्थः ॥ त्रिनयनां पूर्वोक्तबिन्दुत्रयसमष्टिरूपिणीं ॥ जलधरनिभां शुद्धसत्वगुणात्मकत्वात् तथा चिदाकाशत्वात् च नीलवर्णा चिन्तनीयामिति भावः ॥ मुक्तचिकुरां केशविन्यासादिविलासविकारवर्जितां निर्विकारामित्यर्थः ॥ ललज्जिह्वां । जिह्वासिञ्चातनादजोगुणसूचितरुधिरधारा द्रवन्तीं रजोगुणरहितशुद्धसत्वात्मिकां निरञ्जनामिति भावः ॥ नग्नां वस्त्रमेव मायावरणं तेन शून्यां मायातीतामित्यर्थः ॥ शवकरपरीधानसुकटिं सर्वे जीवाः कल्पावसाने स्थूलदेहान् त्यक्त्वा स्वस्वकर्मभिः सह लिङ्गदेहमाश्रित्य महाप्रलयपर्यन्तं कारणदेहस्य अविद्यामयांशे पुनः कल्पारम्भपर्यन्तं आमोक्षं अवतिष्ठन्ते, अतस्तत् मुक्तजीवानां प्रधानकर्मसाधनभूतैः करसमूहैः विराड्रूपिण्याः महादेव्याः गर्भधारणयोग्यनिम्नोदरस्य तथा योनेश्च ऊर्द्ध्वस्थितकटिप्रदेशे परिधानं कल्पितमितिभावः ॥ स्वीयवामोर्द्ध्वहस्तेन ज्ञानखड्गेन निष्कामसाध-

कामं मोहपाशं छित्वा तदधोहस्तेन । विगतरजं मित्रशीनाथ
मस्तकं, तथैव दक्षिणोर्द्ध्वहस्तेन सकामसाधकेभ्यः अभयं म
तदधोहस्तेन चाभीष्टवरञ्च ॥ दधतीमितिभावः ॥ महाम्या
महासत्त्वगुणात्मिका ॥ क ब्रह्मा अ अनन्तश्चल विश्वात्मा
ई सूक्ष्मा च तैः युक्ता काली आद्यन्तरहिता इति भावः ॥

## तत्र शास्त्रवचनप्रमाणम्

"सद्यश्छिन्नशिरः कृपाणमभयं हस्तैर्वरं बिभ्रती
घोरास्यां शिरसां स्रजा सुरुचिरामुन्मुक्तकेशावलिम् ॥
सृक्कयसृक् प्रवहां श्मशाननिलयां श्रुत्योः शवालंकृतिं
श्यामाङ्गीं कृतमेखलां शवकरैर्देवीं भजे कालिकाम् ॥" इति
आगमवचनम्

"करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ।
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषिताम् ॥
खड्गाभयवरांश्छिन्नं मुण्डं च दधतीं करैः ।
महामेघप्रभां श्यामां तथा चैव दिगम्बराम् ॥
कण्ठावसक्तमुण्डालीं गलद्रुधिरचर्चिताम् ।
कर्णावतंसतानीतशवयुग्मविराजिताम् ॥
घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम् ।
शवानां करसङ्घातैः कृतकाञ्चीं हसन्मुखीम् ॥
सृक्कद्वयगलद्रक्तधाराविच्छुरिताननाम् ।
घोररूपां महारौद्रीं श्मशानालयवासिनीम् ॥
दन्तुरां दक्षिणव्यापिमुक्तलम्बकचोच्चयाम् ।
शवरूपमहादेवहृदयोपरिसंस्थिताम् ॥
शिवाभिर्घोररावाभिश्चतुर्दिक्षुसमन्विताम् ।
महाकालसमायुक्तां शवोपरिरताम्बिकाम् ॥

सुखप्रसन्नवरदां स्मेराननसरोरुहाम् ।
एवं संचिन्तयेत् कालीं श्मशानालयवासिनीम् ॥" इति
मेरुतन्त्रवचनम् ।

"कर्म्मणा जायते जन्तुः कर्म्मणैव विलीयते ।
देहे विनष्टे तत् कर्म्म पुनर्देहे प्रलभ्यते ॥" इति
श्रीमहानिर्वाणतन्त्र वचनम् ।

"तस्मात् ज्ञानासिना तूर्णमशेषं कर्म्मबन्धनम् ।
कामाकामकृतं छित्वा शुद्धश्चात्मनि तिष्ठति ॥" इति
शिवधर्म्मोत्तरवचनम् ।

॥ २१ ॥

परे बिन्दुः शुद्धो विमलतरयोन्यन्तरगतो
वहिः षट्कोणाख्यं वसुछदनकं केसरयुतम् ॥
सरोजं भूचक्रत्रितयमपि दिव्यं सुविमलं
यदा यन्त्रं भाति त्वमसि हि तदा श्रीकुलकुजा॥२२॥

अन्वयः — हे परे ! विमलतरयोन्यन्तरगतः शुद्धः बिन्दुः ॥ वहिः षट्कोणाख्यं केसरयुतं वसुछदनकं सरोजं भूचक्रत्रितयं अपि दिव्यं यन्त्रं यदा भाति ॥ तदा त्वं श्रीकुल-कुजा असि ॥

व्याख्या — हे परे ! अतिशयेन विमला निर्मला सा चासौ योनिः त्रिकोणं तस्याः अन्तर्गतः मध्यस्थितः ॥ शुद्धः स्पष्टः ॥ बिन्दुः वैन्दवचक्रम् ॥ वहिः एतद्बिन्दुत्रिकोणाद्बाह्ये ॥ षट्कोणाख्यं षडस्त्रं ॥ केसरयुतं किंजल्कयुक्तं ॥ वसुछदनकं अष्टदलयुतं ॥ सरोजं पद्मं ॥ (तद्बाह्ये) ॥ भूचक्रत्रितयं

भूपुरत्रितयं अपि ॥ दिव्यं शोभनं ॥ सुविमलं निर्मलं ॥ यन्त्र चक्रं ॥ यदा यस्मिन् काले ॥ भाति प्रकाशते ॥ (पूर्वोक्तमिश्रबिन्दु एतद्यन्त्ररूपतां याति इत्यर्थः) तदा तस्मिन्काले ॥ त्वं ॥ श्रीकुलकुजा कुब्जिकेश्वरीरूपा ॥ असि भवसि ॥ कस्मिँश्चिद्मते सकेसराष्टपत्राद्बहिरष्टकोणं तद्बहिः भूपुरत्रयमपि भवति ॥ कादिमतान्तरे यदा कुब्जिकाविद्यायामेव विद्यानां समष्टिर्भवति, तदा बिन्दुत्रिकोण-षट्कोण-सकेसराष्ट-दलाष्टकोण-भूपुरत्रय-युत-यन्त्रमेव कुब्जिका-श्रीचक्रराजमुच्यते ॥ विशेषतः कुब्जिकात्रिरत्नपञ्चरत्नविद्यानां सर्वमतेऽपि श्रीचक्रराजो विज्ञेयः ॥ एतद्यंत्रस्य त्रिकोणषट्कोणचक्रे मतान्तरे अष्टकोणचक्रमपि विमर्शभागाः बिन्दुसकेसराष्टदलकमलभूपुरत्रितयचक्राणि प्रकाशभागाः भवन्ति ॥ पूर्वोक्तकेवलमिश्रबिन्दोः संहारो भवति ॥ तस्मात्कारणात् संहाराम्नाययंत्रे प्रकाशविमर्शात्मकमिश्रबिन्दोः प्रकाशविमर्शरूपभागद्वयं भवति ॥ यतः सकलपश्चिमाम्नायचक्राणां बिन्दुपद्मभूपुरादिकाः प्रकाशभागाः कोणादिकाः विमर्शभागाः ॥ इति यंत्रसंकेतः ॥

## तत्र शास्त्रवचनप्रमाणम्

"बिन्दुत्रिकोणषट्कोणमष्टपत्रं सकेसरम् ।
श्रीमत्कुब्जेश्वरीयन्त्रं सद्वारं भूपुरत्रयम् ॥" इति
"बिन्दुत्रिकोणषट्कोणमष्टपत्राम्बुजं तथा ।
समातृबीजाष्टदलमष्टश्रृङ्गं सभूपुरम् ॥" इति च
आगमवचनम् ।

॥ २२ ॥

प्रतीच्याम्नाये त्वं कुलजननुते श्रीपरशिवे
कुजा भूत्वा सर्वं हरसि तमसास्वीकृततनुः ॥
कुजेशाकारः स प्रभवति तदा श्रीपरशिव-
स्तयोरंशोत्पन्नः प्रलयति स रुद्रोऽखिलजगत ॥२३

अन्वयः — हे कुलजननुते श्रीपरशिवे ! प्रतीच्याम्नाये त्वं तमसास्वीकृततनुः कुजा भूत्वा सर्वं हरसि। तदा सः श्रीपरशिवः कुजेशाकारः प्रभवति। तयोः अंशोत्पन्नः सः रुद्रः अखिलं जगत् प्रलयति।

व्याख्या — कुलजनैः कौलिकैः नुते प्रणमिते ॥ श्रीपरशिवे ॥ प्रतीच्याम्नाये पश्चिमाम्नाये ॥ त्वं ॥ तमसा तमोगुणेन स्वीकृता गृहीता तनुः शरीरं यया सा ॥ कुजा कुब्जिकेश्वरी ॥ भूत्वा ॥ सर्वं सकलं ॥ सर्वपदेनात्र शिवादिक्षित्यन्तं तत्वजातमुच्यते ॥ हरसि प्रलयसि ॥ स श्रीपरशिवः चिद्घननिष्ठः ॥ कुजेशाकारः स्वच्छन्दललितभैरवरूपः ॥ प्रभवति प्रजायते ॥ तयोः कुब्जेशी-कुब्जेश्वरयोः ॥ अंशात् उत्पन्नः अंशजातः ॥ स रुद्रः ॥ अखिलं निखिलं च तत् जगत् लोकं भुवनं ॥ प्रलयति संहरति ॥

## तत्र शास्त्रवचनप्रमाणम्

"सिंहासनं प्रतीच्यां तु संक्षेपं शृणु पार्वति।
अनेकशतसाहस्रं श्रीनाथेन च तारितम् ॥
मंत्रं नानारहस्यं च यामलं लक्षसम्मितम्।
स्वनाभिमथनाद्देवि स्वकीयरसनापुरा ॥

ब्रह्माण्डं गर्भतस्तस्या जातं दिव्येन योनिना ।
तदारभ्य महेशानि कुब्जादेवीति विश्रुता ॥
ज्येष्ठबालप्रभेदेन कुब्जिका लोकपूजिता ।
सद्योजातमुखोद्गीता पश्चिमाम्नायदेवता ॥
कुब्जिका जगतामाद्या महासंहाररूपिणी ।
अनन्तदेशिकैः सेव्या नित्या शिवसमागता ॥" इति
श्रीपरातन्त्रवचनम् ।
"बहुप्रभेदसंयुक्ता कुब्जिका च कुलालिका ।
मातङ्ग्यमृतलक्ष्म्याद्या पश्चिमाम्नायदेवता ॥" इति
श्रीवडवानलतन्त्रवचनम् ।

॥ २३ ॥

प्रतीच्यम्भोजे वै कुचभरनुतां वर्वरशिखां
मृगेन्द्राङ्गे रूढां मदमुदितवक्त्रां त्रिनयनाम् ॥
नृमुण्डानां मालामपि परिदधानां कुलकुजाम् ।
सहस्राकाभां त्वां ह्यभयवरदां नौमि जननि ॥२४॥

अन्वयः — हे जननि ! प्रतीचि अम्भोजे वै कुचभरनतां वर्वरशिखां मृगेन्द्राङ्गे रूढां मदमुदितवक्त्रां त्रिनयनां नृमुण्डानां मालां अपि परिदधानां अभयवरदां सहस्राकाभां सुखदां त्वां हि नौमि ॥

व्याख्या — हे जननि मातः ! प्रतीची अम्भोजे पश्चिमाम्नाये ॥ वै एव ॥ कुचयोः स्तनयोः भरः भारः तेन नता नम्रा तां ॥ वर्वरशिखां विकीर्णकेशभारां ॥ मृगेन्द्रस्य सिंहस्य अङ्गं पृष्ठं तस्मिन् ॥ रूढां उपविष्टां ॥ मदेन आलिमा मुदितं हृष्टं

वक्त्रं वदनं यस्याः सा तां ॥ त्रिनयनां त्रिनेत्रां ॥ नृमुण्डानां नरशिरसां ॥ मालां स्रजं ॥ अपि ॥ परिदधानां बिभ्राणां ॥ अभयवरदां अभयवरदहस्तां ॥ सहस्रं दशशतम् अर्काः सवितारः तेषां भा इव भाः कान्तिर्यस्याः सा तां ॥ कुलकुजां कुब्जिकारूपां ॥ त्वां ॥ हि ॥ नौमि प्रणमामि ॥

निर्गुणभावे — कुचयोः विन्दुयुगलयोः भरः भारः तेन नता नम्रा केवलमिश्रबिन्दुः प्रलयतीति पूर्वमुक्तः तस्मात् संहारावस्थायां शुक्लारुणबिन्दुयुगलं निजभारनतं मिश्रबिन्दौ समष्टिर्भवति इति भावः अतएव कुचभारनतां लयोद्यतामित्यर्थः ॥ वर्वरशिखां वर्वरा विकीर्णा दीपवत् शिखा यस्याः सा तां ॥ परमशक्तिर्दीपशिखावत् जयति, दीपशिखाग्रः दीपशिखान्तरं यथा रज्जुसंमेलनात् प्रजायते तथैव दीपशिखावत् सा परमशक्तिः प्रत्येकदेहिनां कुण्डलिनीरूपेण बहुधा भवति एवं सा विकीर्णिता तस्मात् वर्वरशिखां सकलजीवकुण्डलिनीरूपामिति भावः ॥ मृगेन्द्राङ्के रूढां मृगेन्द्रः ज्ञानरूपसिंहः तस्य अङ्कं पृष्ठं तस्मिन् रूढां उपविष्टां ज्ञानासनां ज्ञानसत्तात्मिकामित्यर्थः ॥ मदमुदितवक्त्रां मद एव सहस्रदलपद्मनिसृतललितारसाभपीयूषधारा तेन मुदितं हृष्टं वक्त्रं वदनं यस्याः सा तां कुण्डलिनीशक्तिरूपामिति भावः ॥ त्रिनयनां बिन्दुत्रयं समष्टिरूपिणीं ॥ सकलजीवेषु नरा एव श्रेष्ठाः तेषामंगेषु ज्ञानविवेकविचारस्थानानि एव मुण्डानि तैर्निर्मितमालां परिदधानत्वात् महादेवी ज्ञानविचारविवेकरूपिणीति सूचिता ॥ अभयवरदां स्वीयसाधकानामभयं तथा चेप्सितवरं च दातुमुद्यतां ॥ सहस्रार्काभां सूर्यबिन्दुरूपिणीं पूर्वोक्तमिश्रबिन्दुरूपां संहारस्वरूपिणीमित्यर्थः ॥ कुलकुजां कुलकुण्डलिनीम् ॥

## तत्र शास्त्रवचनप्रमाणम्

"तरुणरविनिभास्यां सिंहपृष्ठोपविष्टाम्
कुचभरनमिताङ्गीं सर्वभूषाभिरामाम् ॥
अभयवरदहस्तामेकवक्त्रां त्रिनेत्राम्
मदमुदितमुखाब्जां कुब्जिकां चिन्तयामि ॥" इति
आगमवचनम् ।

"वृषभे संस्थितं देवं स्वर्णरूपशोभितम् ।
एकवक्त्रं त्रिनेत्रं च भुजाष्टादशधारिणम् ॥
परशुं डमरुं बाणं खड्गमंकुशवज्रकम् ।
शङ्खं च वेणुवाद्यं च वरदं दक्षिणे करे ॥
वामे खट्वाङ्गशूलं च धनुः फलकपाशकम् ।
घण्टां कपालं वेणुं च अभयं भयनाशनम् ॥
पट्टेन वध्यितं जानुवामोरुस्था च कुब्जिका ।
एकवक्त्रा त्रिनेत्रा च करुणावरवर्णिता ॥
द्विभुजा वरदा देवी सिंहस्थाऽभयसव्यसु ।
नानाभरणभूषाङ्गी खण्डेन्दुकृतशेखरा ॥
वर्वरा केशपाशेन चारुपीनघनस्तनी ।
एवं ध्येया कुजा माता पश्चिमाम्नायवाचिका ॥" इति
श्रीपरातन्त्रवचनम् ।

॥ २४ ॥

सबिन्दुत्र्यस्राढ्यं शरनवकवृत्ताष्टदलकैः
सुवृत्ताष्टाकेन्द्राभिधनलिनकाष्टाशनियुतम् ॥
शिरश्शूलज्वालापितृवनयुतं यन्त्रमतुलं
यदा भाति त्वं वै भवसि भुवि गुह्या भगवति ॥२५॥

अन्वयः — हे भगवति ! यदा सबिन्दुत्र्यस्राढ्यं शरनवकवृत्ताष्टदलकैः (युतं) सुवृत्ताष्टार्केन्द्राभिधनलिनकाष्टाशनियुतं शिरश्शूलज्वालापितृवनयुतं अतुलं यन्त्रं भाति । (तदा) त्वं वै भुवि गुह्या भवसि ॥

व्याख्या — हे भगवति ! यदा यस्मिन्काले ॥ बिन्दुना बैन्दवचक्रेण सह वर्तमानं यथा स्यात् तथा त्र्यस्रं त्रिकोणं तेन आढ्यं युक्तं ॥ शराश्च पञ्चकोणञ्च नवकञ्च नवकोणञ्च वृत्तञ्च वर्तुलाकारश्च अष्टदलकञ्च तैः (युक्तं इति शेषः) ॥ सुवृत्तञ्च वर्तुलाकारश्च अष्टकञ्च अष्टपत्रञ्च अर्कश्च द्वादशपत्रञ्च (इन्द्र एव चतुर्दशः) इन्द्राभिधनलिनकञ्च चतुर्दशपत्रकमलञ्च अष्टाशनिश्च तैः युतम् संयुक्तम् ॥ शिरश्च मुण्डाण्डकञ्च शूलानि च अष्टशूलानि च ज्वाला च अनलशिखा च पितृवनञ्च श्मशानञ्च तैः युतं संयुक्तम् ॥ अतुलं महत् ॥ यन्त्रं चक्रं ॥ (पूर्वोक्तवत्) भाति शोभते ॥ तदा तस्मिन्काले ॥ त्वं ॥ वै ॥ भुवि भूशब्देनात्र चतुर्दशभुवनमित्युच्यते ॥ गुह्या गुह्यकालीरूपा ॥ भवसि वर्तसे ॥ एतद्यन्त्रस्य त्रिकोणपंचकोणनवकोणचक्राणि विमर्शभागाः अन्य सर्वचक्राणि प्रकाशभागाः भवन्ति ॥ पूर्वोक्तकेवलमिश्रबिन्दोः तिरोधानं भवति ॥ तस्मात् कारणात् अनाख्यायन्त्रे प्रकाशविमर्शात्मकमिश्रबिन्दोः प्रकाशविमर्शरूपभागद्वयं भवति ॥ यतः सकलोत्तराम्नायचक्राणां कोणादिकाः विमर्शभागाः अन्यचक्राणि प्रकाशभागा भवन्ति ॥ इति यंत्रसंकेतः ॥

## तत्र शास्त्रवचनप्रमाणम्

"सबिन्दुत्र्यस्रपञ्चास्रविभिन्ननवकोणकम् ।
वृत्तयोरन्तरेऽष्टाङ्कयुतं तदनु भामिनि ॥

वस्वर्कभूपच्छदनांभोजवृत्तान्वितं ततः ।
अष्टाशनिसमायुक्तमन्तर्बहिरथापि च ॥
अष्टशूलाष्टमुण्डाढ्यं वह्निज्वालायुतेन हि ।
श्मशानेनावृतं शेषे शोणितोदेन वेष्टितम् ॥
यन्त्रराजमिदं देवि पूजनाय प्रकल्पितम् ।" इति
श्रीमहाकालसंहितावचनम् ।

॥ २५ ॥

उदीच्याम्नाये त्वं मनुतनुरनाख्या त्रिगुणिका
परे गुह्या भूत्वाऽऽचरसि हि तिरोधानमखिलम् ॥
नृसिंहाकारः सन् निवसति तदा श्रीपरशिव-
स्तयोरंशोत्पन्नेश्वर इह पिधानं प्रकुरुते ॥२६॥

अन्वयः — हे परे ! त्वं वै उदीच्याम्नाये मनुतनुः अनाख्या त्रिगुणिका गुह्या भूत्वा अखिलं तिरोधानं हि आचरसि । तदा श्रीपरशिवः नृसिंहाकारः सन् निवसति । तयोः अंशोत्पन्नेश्वरः इह पिधानं प्रकुरुते ॥

व्याख्या — हे परे ! त्वं वै ॥ उदीच्याम्नाये उत्तरा-म्नाये ॥ मनुः मन्त्रः एव तनुः शरीरं यस्याः सा मन्त्रमात्रमूर्तिः ॥ अनाख्या मनोवचनागम्या ॥ त्रयो गुणाः सत्वरजस्तमो गुणाः यस्याः सा ॥ गुह्या गुह्यकालीरूपा ॥ भूत्वा ॥ अखिलं निखिलं अखिलपदेनात्र शिवादिक्षित्यन्तं तत्वजातमुच्यते ॥ तिरोधानं अन्तस्थापनं ॥ हि निश्चयेन ॥ आचरसि करोषि ॥ तदा तस्मिन् काले ॥ श्रीपरशिवः चिद्घननिष्ठः ॥ नृसिंहाकारः नारसिंहभैरवस्वरूपः ॥ सन् ॥ निवसति वर्तते ॥ तयोः गुह्य-

श्वरीगुह्येश्वर्योः ॥ अंशात् विभूत्याः उत्पन्नः जातः स चासौ ईश्वरः ॥ इह अत्रसंसारे ॥ पिधानं तिरोधानं ॥ प्रकुरुते विदधाति ॥ कस्मिंश्चित् मते उत्तराम्नायः अनाख्यारूपः, ऊर्द्ध्वाम्नायः भाषारूपः" इत्यभिधीयते ॥ मतान्तरे ऊर्द्ध्वाम्नायः अनाख्यारूपः, उत्तराम्नायः भाषारूपः इति चोच्यते ॥ वाडवानलीयतन्त्रे तु" उभयोरेकत्वव्याख्यानं दृश्यते ॥ उक्तं च "महात्रिपुरसुन्दर्य्याः चण्डयोगेश्वरी परा । न तयोर्विद्यते भेदो भेदकृन्नरकं व्रजेत् ॥" पूर्वोक्तयोनिबिन्दुविसर्गाणां सगुणमूर्तिरुत्तराम्नायमते कामकलाकाली चोर्द्ध्वाम्नायमते तु षृद्द्रूपिणी महात्रिपुरसुन्दरीति" वाडवानलीयतन्त्रं व्याख्याति ॥ तत् तन्त्रोक्तमहात्रिपुरसुन्दर्य्याः भैरवस्य पंचवदनरूपे मध्यवक्त्रं एव सिंहरूपं ऊर्द्ध्वज्योतिवक्त्रान्तरे सिद्धिकरालीति ॥ उक्तं च "सिंहास्यं मध्यवक्त्रन्तु दक्षिणे कोलकृष्णकम् ॥" इति, "ज्योतिवक्त्रान्तरे सिद्धिकरालीं च विचिन्तयेत् ॥" इति च वडवानलतन्त्रोक्तनिर्वाणभैरवध्याने ॥ पुनः सिद्धिकराल्याः भैरवः नारसिंहभैरव इति महाकालसंहितायां गुह्यखण्डे स्पष्टं दृश्यते ॥

## ॥ तत्र शास्त्रवचनप्रमाणम्

"अनाख्या चोत्तरे देवि भाषा चोर्द्ध्वे प्रकीर्तिता ।" इति आगमसारवचनम् ।

"वामदेवाश्रिताम्नायं कथयामि तवाग्रतः ।
उग्राम्नायसमुद्भवन्तु कालीकुलसमुद्भवा ॥
कोटिकोटिप्रभेदास्तु कालिका तीव्रनायिका ।
आशासिद्धिप्रदादेवी त्रिगुणतेजोपसंहिता ॥
नारायणी महाकाली चण्डयोगेश्वरीति च ।
काली काली महाकाली जगद्रक्षणतत्परा ॥

तिष्ठन् गच्छन् स्मरन्नित्यं मुच्यते महतो भयात् ।
आब्रह्मस्थावरान्ताश्च कालेन कलयन्ति च ॥
तं कालं कलयत् काली ततः सा कालिका स्मृता ।
अनेकचक्रचक्रेशी नानाभेदा महासमा ॥
शक्यते कालिकादेव्या देव्यो ब्रह्मादयोऽपि हि ।
तथापि लेशमात्रन्तु कुमारीक्रमतः शृणु ॥" इति
श्रीपरातन्त्रवचनम् ।

"भेदास्त्वेकोनपञ्चाशद्गुह्यकाम्नायवर्त्मनि ।
गुह्यकाली ततः प्रोक्ता सिद्धिलक्ष्मीस्ततः परम् ॥
स्वर्णकोटीश्वरी तत्र राजराजेश्वरी तथा ।
गुह्येश्वरी तथा प्रोक्ता तथा तारा त्रिरूपिणी ॥
छिन्नमस्ता महादेवी ततः प्रोक्ताऽतिभीषणा ।
एवंविधास्तु संकेताः सदा गोप्याः प्रकीर्तिताः ॥" इति
मुण्डमालावचनम् ।

॥ २६ ॥

मृगेन्द्राभाश्वार्त्ताख्यमकरगरुत्मानवशिवा-
प्लवंगेशीवक्त्रां श्रुतिशरभुजैरायुधधराम् ॥
उदीच्याम्भोजे त्वां विधुसकलचूडां घननिभाम्
भजेऽहं गुह्येशीमभिनववयस्कां भगवति ॥२७॥

अन्वयः — हे भगवति ! उदीच्याम्भोजे मृगेन्द्राभाश्वार्त्ताख्यमकरगरुत्मानवशिवाप्लवङ्गेशीवक्त्रां श्रुतिशरभुजैः आयुधधरां विधुसकलचूडां घननिभां अभिनववयस्कां गुह्येशीं त्वां अहं भजे ॥

व्याख्या — हे भगवति! मृगेन्द्रश्च सिंहश्च इभश्च हस्ती च अश्वश्च तुरगश्च ऋक्षाख्यश्च भल्लुकश्च मकरश्च ग्राहश्च गरुत्च खगेन्द्रश्च मानवश्च मनुष्यश्च शिवा च शृगालश्च प्लवङ्गश्च वानरश्च ईशी च योगेश्वरी च तासां वक्त्राणि इव वक्त्राणि आननानि यस्याः सा तां ॥ श्रुतिशरैः चतुःपञ्चाशद्भिः भुजैः बाहुभिः ॥ आयुधानां प्रहरणानां धरा तां ॥ विधुसकलचूडां शशिधरां ॥ अभिनवं नूतनं वयः अवस्था यस्याः सा तां ॥ गुह्येशीं सिद्धिकरालीरूपां ॥ त्वां ॥ अहं भजे शिश्रिये ॥

निर्गुणभावे — मृगेन्द्रश्च ज्ञानशक्तिश्च इभश्च आधारशक्तिश्च अश्वश्च वेगशक्तिश्च ऋक्षाख्यश्च भूचरशक्तिश्च मकरश्च जलचरशक्तिश्च गरुत्च खेचरशक्तिश्च मानवश्च चैतन्यशक्तिश्च शिवा च धीशक्तिश्च प्लवङ्गश्च आरोहावरोहकर्त्री कुण्डलिनीशक्तिश्च ईशी च योगशक्तिश्च ता एव वक्त्राणि यस्याः सा तां विराड्रूपिणीमिति भावः ॥ श्रुतिशरभुजैरायुधधरां चतुःपञ्चाशत्करैः प्रहरणधरां मनोबुद्धिचित्ताहङ्कारसमेतपञ्चाशदक्षरमयीं तस्मात् "अक्षराद्विश्वसंभवः" इति सिद्धान्तात् महादेवीं विश्वान्तस्करणरूपामिति सूचितम् ॥ विधुसकलचूडां परमामृतरूपिणीं विश्वम्भरां ॥ अभिनववयस्कां विश्वं पुनर्बहिर्निस्सारणोद्यतां (अस्य यथार्थभावो महात्रिपुरसुन्दरीध्याने विशेषरूपेण वक्ष्यते) ॥ गुह्या अतीवगुप्ता सैव ईश्वरी अनाख्यास्वरूपिणीति भावः ॥

## तत्र शास्त्रवचनप्रमाणम्

"दशवक्त्रा षोडशार्णा चतुष्पञ्चाशद्दोर्युता ।
सर्वासां गुह्यकालीनां सा वै मुख्यतमा स्मृता ॥" इति

"ध्यायेद्देवीप्रभावोत्थप्रोच्छलद्रक्तवारिधिम् ।
उत्तुङ्गोत्तुङ्गकल्लोलप्रपूरितदिगन्तरम् ॥
तत्र द्वीपं रक्तमांसपूरितं रक्तवालुकम् ।
नवकोटिकचामुण्डा कोटिभैरववेष्टितम् ॥
तन्मध्ये मण्डलं ध्यायेद्योजनायुतविस्तृतम् ।
भैरवीकोटिघटितं प्राकारं तत्र चिन्तयेत् ॥
एकं श्मशानं तन्मध्ये शतयोजनविस्तृतम् ।
चिन्तयेत् प्रोच्छलद्वह्निज्वालाव्याप्तर्त्तमण्डलम् ॥
योगिनीकोटिविहितकरतालिकचेष्टितम् ।
नारान्त्रनद्धमुण्डस्रक्कृततोरणमालिकम् ॥
तदन्तःस्थापिनीं कालीं ध्यायेन्निश्चलमानसः ।
रत्नसिंहासनं दिव्यं हीरमुक्तादि निर्मितम् ॥
धारयन्तं चतुष्कोणे युगं वेदं विचिन्तयेत् ।
सत्ययुगं च ऋग्वेदं शुक्लवर्णं च पूर्वगम् ॥
त्रेतायुगं यजुर्वेदं पीतवर्णं च दक्षगम् ।
द्वापरं सामवेदं च रक्तं पश्चिमदिग्गतम् ॥
अथर्ववेदं च कलिं श्याममुत्तरदिग्गतम् ।
उपवेदस्य शुभ्रस्य मूर्ध्नि सिंहासनं स्थितम् ॥
तस्य सिंहासनस्योर्ध्वमन्यत् सिंहासनं महत् ।
स्वस्वास्त्रवाहनयुतैर्दिगष्टपतिभिर्वृतम् ॥
देव्याः सिंहासनधरांस्तांश्च ध्यायेदतन्द्रितः ।
स्वां स्वां दिशमवष्टभ्य स्थितान् परमशोभितान् ॥
इन्द्रं पीतं सवज्रं च स्थितमैरावतोपरि ।
पावकं रक्तवर्णं च छागस्थं शक्तिपाणिकम् ॥
यमं कृष्णं कासरस्थं दण्डहस्तं भयानकम् ।
निर्ऋतिं धूम्रवर्णं च खड्गहस्तं तुरङ्गकम् ॥

वरुणं पाशहस्तं च शुभ्रं मकरवाहनम् ।
श्यामं वायुं ध्वजधरं हरिणोपरि संस्थितम् ॥
गदाधरं कुबेरं च कुंकुमाभं नरे स्थितम् ।
ईशानं शुभ्रवर्णं च शूलहस्तं वृषे स्थितम् ॥
सिंहासनं तृतीयं च पंचप्रेतैधृ तं प्रिये ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥
एते पञ्चमहाप्रेताः स्थिताः सिंहासनादधः ।
पीतः श्यामस्तथा रक्तो धूम्रः श्वेतः क्रमादिमे ॥
दण्डं चक्रं च शक्तिं च शूलं खट्वाङ्गमेव च ।
धारयन्तो मुखे न्यस्ततर्जनीकास्त्रिलोचनाः ॥
केशरिद्विपकोलाश्च फेत्काररवभीषणाः ।
ऊर्ध्वं पीठं ततो ध्यायेद्भैरवाख्यं भयानकम् ॥
खर्वं स्थूलतरं घोरं कृष्णवर्णं चतुर्भुजम् ।
पञ्चवक्त्रं त्रिनेत्रं च काकशाभरणान्वितम् ॥
खट्वाङ्गं कर्त्तृकां दत्ते कपालं डमरुं तथा ।
धारयन्तं मुण्डमालायुतं दंष्ट्राग्रभीषणम् ॥
तदूर्ध्वं षोडशदलं पद्मं यज्ञोपकल्पितम् ।
ज्योतिष्टोमोऽग्निष्टोमो वाजपेयश्च षोडशी ॥
चयनं पुण्डरीकं च राजसूयोऽश्वमेधकः ।
बार्हस्पत्यं विश्वजिच्च गोमेधो नरमेधकः ॥
सौत्रामण्यर्धसावित्री सूर्यकान्तोऽचलम्भिदः ।
एतैः षोडशभिर्दलैः पद्मं प्रकल्पितम् ॥
तस्योपरि ततो ध्यायेच्छिववासनमनुत्तमम् ।
विन्दुनादयुतं नीलं शशाङ्ककृतलाञ्छनम् ॥
महार्घरत्नाभरणं त्रिनेत्रं भीमदर्शनम् ।
वज्रदंष्ट्रानखस्पर्शं पद्मपृष्ठे शिवोत्तमम् ॥

पिङ्गोर्ग्रैकजटाभारं द्विभुजं नागहारिणम् ।
वसानं चर्म वैयाघ्रं शूलखट्वाङ्गधारिणम् ॥
अष्टपत्राम्बुजं तस्योपरिष्टान्नवमासनम् ।
धर्मो— ज्ञानं च वैराग्यमैश्वर्यं— च चतुर्दिशि ॥
यशो विवेकः कामश्च मोक्षश्चेति विदिग्दिशि ।
एवमष्टदलाम्भोजोपविष्टां गुह्यकालिकाम् ॥
ध्यायेन्नीलोत्पलश्यामामिन्द्रनीलसमद्युतिम् ।
घनाघनतनुद्योतां स्निग्धदूर्वादलद्युतिम् ॥
ज्ञानरश्मिच्छटाटोपज्योतिर्मण्डलमध्यगाम् ।
दशवक्त्रां गुह्यकालीं सप्तविंशतिलोचनाम् ॥
द्विद्विनेत्रयुतां वक्त्रे वामदक्षिणसंमुखे ।
सप्तस्वन्येषु वक्त्रेषु त्रित्रिलोचनसंयुताम् ॥
ऊर्ध्ववक्त्रं दीपकाख्यं चण्डयोगेश्वरीति हि ।
तस्याधः केशरिमुखं श्वेतवर्णं विभीषणम् ॥
तस्याधः फेरुवक्त्रं च कृष्णं त्रैलोक्यडामरम् ।
वानरास्यं ततो वामे रक्तवर्णं महोज्ज्वलम् ॥
नरास्यं तदधो ज्ञेयं किर्मीराभं महोत्कटम् ।
ऋक्षवक्त्रं भवेद्दक्षे धूम्रवर्णं भयानकम् ॥
गारुडास्यं ततो वामे पिङ्गवर्णं सुकञ्चुकम् ।
दक्षिणे मकरास्यं च हरिताभं प्रकीर्तितम् ॥
गजास्यं वामतः प्रोक्तं गौरवक्त्रं त्रवन्मदम् ।
हयास्यं दक्षिणे काल्याः श्यामवर्णं विचिन्तयेत् ॥
महादंष्ट्राकरालानि दारुणस्वनवन्ति च ।
अट्टाट्टहासयुक्तानि त्रवद्रक्तानि सर्वदा ॥
लेलिहानविनिष्क्रान्तललज्जिह्वान्वितानि च ।
अहर्निशं कम्पमानान्यास्यानि दधतीं शिवाम् ॥

भीमनिह्रादिनीं भीमां भ्रूभङ्गकुटिलाननाम् ।
पिङ्गलोर्ध्वजटाजूटां चन्द्रार्धकृतशेखराम् ॥
नानारत्नविनिर्माणसमुण्डस्वर्णभूषणाम् ।
स्रवद्रक्तनृमुण्डास्रकृकृतनक्षत्रमालिकाम् ॥
आकुण्ठगुल्फलम्बिन्या ऽलंकृतां मुण्डमालया ।
श्वेतास्थिगुलिकाहारग्रैवेयकमहोज्ज्वलाम् ॥
शवदीर्घाङ्गुलीपंक्तिमण्डितोरःस्थलस्थिराम् ।
कठोरपिङ्गलोत्तुङ्गवक्षोजयुगलान्विताम् ॥
महामारकतग्राववेदिश्रोणिपरिष्कृताम् ।
विशालजघनाभोगामतिक्षीणकटिस्थलाम् ॥
अन्त्रनद्धार्भकशिरोवलत्किङ्किणिमण्डिताम् ।
चतुष्पंचाशतादोष्णां भूषितां जगदम्बिकाम् ॥
रत्नमालां कपालं च चर्म पाश तथैव च ।
शक्ति खट्वाङ्गमुण्डं च भुशुण्डीं धनुरेव च ॥
चक्रं घण्टां ततो बालप्रेतं शैलमतः परम् ।
नरकं कालनकुलौ सर्वमुन्मादवंशिकान् ॥
मुद्गरं वह्निकुण्डं च डमरुं डिण्डिमं तथा ।
भिन्दिपालं च मुशलं पाशं पट्टिशमेव च ॥
शतघ्नीं च शिवापोतं वामहस्तेषु बिभ्रतीम् ।
अथ दक्षभुजे रत्नमालां कर्त्रीमसिं तथा ॥
तर्जनीमंकुशं दण्डं रत्नकुम्भं त्रिशूलकम् ।
पञ्चपाशुपतान् बाणान् शोषकोन्माद मूर्छकान् ॥
संहारकान् मृत्युकरानेमं नामप्रधारिणः ।
कुन्तं च पारिजातं च छुरिकां तोमरं तथा ॥
पुष्पमालां डिण्डिभं च गृध्रं चैव कमण्डलुम् ।
मांसखण्डं श्रुवं बीजपूरं श्रुचं तथैव च ॥

परशुं च गदां यष्टिं मुष्टिं कुणपलालनम् ।
धारयन्तीं महारौद्रीं जगत्संहारकारिणीम् ॥
जवापुष्पाभनागेन्द्रकृतनूपुरयुग्मकाम् ।
पाटलोरगनिर्माणलसदङ्गदशोभिताम् ॥
धूसराहिकृतस्फीतकटिसूत्रावलम्बिनीम् ।
सुपाण्डुरभुजंगेन्द्रकृतताटङ्कशोभिताम् ॥
श्वेतदर्वीकरानद्धजटामुकुटमण्डिताम् ।
वैयाघ्रचर्मवसनां द्वीपिचर्मोत्तरीयकाम् ॥
किङ्किणीजालशोभाढ्यां वीरघण्टानिवादिनीम् ।
नूपुरारावललितां घर्घराशब्दभीषणाम् ॥
कटकाङ्गदकेयूरनरास्थिकृतशोभनाम् ।
रक्तपद्ममयीं मालां पादपद्मावलम्बिनीम् ॥
काञ्चीकह्लारकप्रेङ्खत्कटिमध्यविराजिताम् ।
ब्रह्मसूत्रोज्ज्वलत्कण्ठयोगपट्टोत्तरीयकाम् ॥
सौम्योग्रभूषणैर्युक्तां नागाष्टकविसर्जिताम् ।
रत्नकुण्डलकर्णश्रीपद्मकालानलस्थिताम् ॥
पद्मोपरिस्थितां देवीं नृत्यमानां सदोदिताम् ।
पद्मासनसुखासीनां सर्वदेवाधिदेवताम् ॥
मुक्तहुंकारजिह्वाग्रं चालयन्तीं विचिन्तयेत् ।
त्रिकोटिशक्तिचामुण्डानवकोटिभिरन्विताम् ॥
महायोगिनीकोटीनामष्टादशभिरूर्जिताम् ।
चरन्तीं च हसन्तीं च डाकिनीषष्टिकोटिभिः ॥
भैरव्यशीतिकोटीभिः परिवारैश्च वेष्टिताम् ।
कोटिकालानलज्वालान्यकारोद्यत्कलेवराम् ॥
महाप्रलयकोट्यर्कविद्युदर्बुदसन्निभाम् ।
दुर्निरीक्ष्यां महाभीमां सेन्द्रैरपि सुरासुरैः ॥

शत्रुपक्षक्षयकरीं दैत्यदानवसूदिनीम् ।
निर्विकारां निराभासां कूटस्थां चिद्विलासिनीम् ॥
अद्वैतां परमानन्दां नित्यां शुद्धां निरञ्जनाम् ।
सृष्टिः स्थितिश्च संहारोऽनाख्या भासा पदाभिधाम् ॥
वेदान्तवेद्यां कैवल्यरूपां निर्वाणकारिणीम् ।
गुणातीतामात्मरूपप्रबोधातीतगोचराम् ॥
एवं ध्येया महाकाली प्रोद्भिन्ननवयौवना ।
पञ्चवक्त्रस्य मध्यस्थां गुह्यकाली परेश्वरी ॥" इति च
"अथ वक्त्रभिदाबाहुभेदान्देवि निशामय ।
येषां येषां च जन्तूनामाकारकमुखं भवेत् ॥
दशानना तु या गुह्या चतुष्पंचाशबाहुका ।
नरद्वीपहरिग्राहशिवेभकपिवाजिनाम् ॥
तार्क्ष्यदर्याकारवक्त्रासा क्रमन्ते पूर्वमीरिता ॥" इति च
श्रीमहाकालसंहितागुह्याखण्डवचनम् ।

॥ २७ ॥

**सबिन्दुत्र्यष्टादिग्युगलमनुकोणाष्टविधुक-**
**त्रिवृत्तज्यागेहत्रितययुतयन्त्रं लषति ते ।**
**तदा कामेशी त्वं जननि निखिलाम्नायनिलया**
**परे श्रीविद्याख्या भवसि कुलपूज्या क्रमयुता ॥२८॥**

अन्वयः — हे परे ! जननि ! ते सबिन्दुत्र्यष्टादिग्युगलमनुकोणाष्टविधुकत्रिवृत्तज्यागेहत्रितययुतयन्त्रं लषति । तदा त्वं कुलपूज्या क्रमयुता निखिलाम्नायनिलया श्रीविद्याख्या कामेशी भवसि ॥

व्याख्या — हे परे ! जननि मातः ! ते विन्दुश्च सर्वानन्दमयवैन्दवचक्रश्च, त्रि च सर्वसिद्धिप्रदत्रिकोणचक्रञ्च, अष्ट च सर्वरोगहराष्टारचक्रश्च, दिग्युगलञ्च सर्वरक्षाकरान्तर्दशारसर्वार्थसाधनकरवहिर्दशारचक्रद्वयं च, मनुकोणञ्च सर्वसौभाग्यदायकचतुर्दशारचक्रश्च, अष्ट च सर्वसंक्षोभणाष्टदलचक्रश्च, विधुकञ्च सर्वाशापरिपूरकषोडशदलचक्रश्च, त्रिवृत्तश्च त्रैवर्गसाधनकरत्रिवृत्तचक्रञ्च, ज्यागेह त्रितयश्च त्रैलोक्यमोहनकर भूपुरत्रयचक्रं च तैः युतं तेन सह वर्तमानं यथा स्यात तथा चादः यन्त्रं ॥ लषति प्रकाशते ॥ पुरोक्तकामकलाललनाचारेण मिश्रविन्दुा रुच्छूनात् श्रीचक्रतां याति इत्यर्थः ॥ श्रीचक्रस्योद्धारः क्रमत्रयेणापि भवति ॥ सृष्टिस्थितिसंहारक्रमाणि एव क्रमत्रयं भवंति । तत् क्रमत्रयेणोद्धृतश्रीचक्रोद्धारप्रमाणमत्र शास्त्रवचनप्रमाणे दर्शयिष्यते ॥ एवं ॥ कुलपूज्या कुलाचारेण पूज्या कुलाचारश्चात्र शास्त्रवचनप्रमाणे दर्शयिष्यते ॥ क्रमयुता कादि सादि हादि क्रममंत्र समष्टिरूपिणी ॥ निखिलाम्नायनिलया सर्वाम्नायेश्वरी ॥ श्रीविद्याख्या श्रीविद्यास्वरूपिणी ॥ कामेशी श्रीमन्महात्रिपुरसुन्दरीरूपा ॥ भवसि ॥ एतत् सर्वं मदीय श्रीपराविभूतिस्तोत्रात् स्पष्टं अवगम्यते ॥ एतद्यन्त्रराजस्य विन्दु - अष्टदल - षोडशदल - वृत्तत्रय - भूपुरचक्राणि एतानि पञ्चचक्राणि शैवभागाः अतएव प्रकाशांशाः भवन्ति ॥ तथैव त्रिकोणं अष्टकोणं दशकोणद्वयं चतुर्दशारं एतानि पञ्चचक्राणि शक्तिचक्राणि, अतएव विमर्शांशाः भवन्ति ॥ इति यंत्रसंकेतः ॥

## तत्र शास्त्रवचनप्रमाणम्

विन्दुत्रिकोणवसुकोणदशारयुग्मम्
मन्वस्त्रनागदलसंगतषोडशारम् ॥

वृत्तत्रयञ्च धरणीसदनत्रयञ्च
श्रीचक्रराजमुदितं परदेवतायाः ॥" इति सृष्टिक्रमे।

"भूबिम्बचक्रमथषोडशचाष्टबिन्दु—
अग्न्यस्त्रसंयुतमहत् त्रितयं दशारम् ॥
वेदारसंयुतदशास्पदमध्यरूपां
त्वां वै महात्रिपुरसुन्दरि नौम्यहं श्रीः ॥" इति स्थितिक्रमे।

"भूवेश्मगर्त्तत्रवृतषोडशनागशक्र—
दिग्युग्मवस्वनलकोणगबिन्दुमध्ये ॥
सिंहासनोपरिगतारकपीठमध्ये
प्रोत्फुल्लपद्मनयनां त्रिपुरां भजेऽहम् ॥" इति संहारक्रमे।

"कुलस्त्रियं कुलगुरुं कुलदेवीं महेश्वरि।
नित्यं यत् पूजयेद्विश्वं स कुलाचार उच्यते ॥" इति
श्रीरुद्रयामलतन्त्रवचनम्।

"त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम्।
सर्वसंक्षोभणं चक्रं सर्वसौभाग्यदायकम् ॥
सर्वार्थसाधनं चक्रं सर्वरक्षाकरं परम्।
सर्वकामप्रदं चक्रं सर्वसिद्धिप्रदायकम् ॥
सर्वानन्दमयं चक्रं नवमं चक्रनायकम्।
सर्वे तद्बैन्दवे लीना तच्छ्रीचक्रमुदाहृतम् ॥" इति
श्रीपरातन्त्रवचनम्।

"बिन्दुत्रयमयं तेजस्त्रिविकारं त्रिवृत्तकम्।
त्रैवर्गसाधनं चक्रं पशूनां बुद्धिनाशनम् ॥" इति
श्रीवडवानलतन्त्रवचनम्।

"त्रिकोणमष्टकोणञ्च दशकोणद्वयन्तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्चह ॥
बिन्दुमष्टदलं पद्म तथा षोडशपत्रकम् ।
त्रिवृत्तं चतुरस्रञ्च शिवचक्राणि सुन्दरि ॥
त्रिकोणरूपिणी शक्तिः बिन्दुरूपः शिवः स्मृतः ।
बिन्दोरन्तर्गता देवी महात्रिपुरसुन्दरी ॥" इति
श्रीमहायोनितन्त्रवचनम् ।

॥ २८ ॥

**महोदूर्ध्वाख्ये भाषा सुवचनमनोगम्यतनुयुक्**
**परे त्वं श्रीर्भूत्वाऽऽचरसि निखिलानुग्रहमलम् ॥**
**तदा निर्वाणाख्यः प्रभवति परः कामतनुमान्**
**तयोरंशोत्पन्नः शमनुतनुते पञ्चवदनः ॥२६॥**

अन्वयः — हे परे ! त्वं महोदूर्ध्वाख्ये सुवचनमनोगम्यतनुयुक् भाषा श्रीः भूत्वा निखिलानुग्रहं अलं आचरसि । तदा परः निर्वाणाख्यः कामतनुमान् प्रभवति । तयोः अंशोत्पन्नः पञ्चवदनः शं अनुतनुते ॥

व्याख्या — हे परे ! त्वं ! महोदूर्ध्वाख्ये ऊदूर्ध्वाम्नाये सुवचनञ्च मनश्च ताभ्यां अगम्या या तनुः तया युक्ता सुवचनमनोगम्यतनुयुक् अवाङ्मनसगोचरा ॥ भाषा सत्त्वैकमूर्तिः ॥ श्रीः श्रीविद्यास्वरूपिणी महात्रिपुरसुन्दरीरूपा ॥ भूत्वा ॥ अनुग्रहं पुनः वहिः निस्सारणरूपानुग्रहं ॥ अलं अत्यन्तं ॥ आचरसि करोषि ॥ तदा तस्मिन्काले ॥ परः चिद्घननिष्ठः ॥ निर्वाणेन आख्यातः निर्वाणभैरव इति आख्यातः ॥ कामतनुमान्

कामेश्वरभैरवरूपः ॥ प्रभवति जायते ॥ तयोः कामकामेश्वरयोः ॥ अंशोत्पन्नः अंशजातः ॥ पञ्चवदनः पञ्चवक्त्रसदाशिवः ॥ शं पूर्ववत् अनुग्रहं ॥ अनुतनुते करोति ॥

तत्र शास्त्रवचनप्रमाणम्

"ऊर्ध्वसिंहासनं वन्दे त्रैलोक्यैश्वर्यसूचकम् ।
सर्वचक्रेश्वरी नित्या सर्वाम्नायप्रपूजिता ॥
सर्वसिंहासनमयी ईशानास्येन चोदिता ।
परब्रह्मेश्वरी चाद्या देवी मायाशिवेश्वरी ॥
निद्रा बुद्धिः क्षमा ख्यातिः क्षुधा लज्जा स्मृतिर्धृतिः ।
तस्या दर्शनमात्रेण साक्षाल्लक्ष्मीपतिर्भवेत् ॥" इति श्रीपरातन्त्रवचनम् ।

॥ २९ ॥

महोर्ध्वाम्नाये त्वां कपिगणिनिखिलाम्नायजननीम्
ह्याचारैस्तैर्भ्यां क्रमहरमनुरूपां त्रिपथगाम् ॥
ह्रींकारेद्धां साद्धामिकुलकुलमार्गाभ्यसनिनीम्
महापञ्चप्रेतोपरि सकलसिंहासनगताम् ॥३०॥

सहस्रादित्याभामरुणवसनां मन्दहसनाम्
त्रिनेत्रास्यां पाशाङ्कुशकुसुमचापैक्षवधराम् ॥
निशानाथोत्तंसां जितमदनरूपाङ्ग युवतीम्
भजेऽहं श्रीविद्ये त्रिपुरललितां श्रीपदसुताम् ॥३१॥

॥ अन्वयः — हे श्रीविद्ये ! महोद्र्ध्वाम्नाये त्वां क्रमगति-खिलाम्नायजननीं कहसमनुरूपां अकुलकुलमार्गाभ्यसनिनीं हठाचारैर्लभ्यां त्रिपथगां हकारार्द्धां साद्धां महापञ्चप्रेतोपरि-रुचिरसिंहासनगतां सहस्रादित्याभां जितमदनरूपां च युवतीं त्रिनेत्रास्यां मन्दहसनां निशानाथोत्तंसां अरुणवसनां पाशांकुश-कुसुमवाणैस्तवधरां श्रीपदयुतां त्रिपुरललितां अहं भजे ॥

व्याख्या — हे श्रीविद्य विद्योत्तमे ॥ महोद्र्ध्वाम्नाये महति ऊर्द्ध्वाम्नाय विख्याते सिंहासने ॥ त्वां ॥ क्रमं क्रमदीक्षां गच्छन्तीति ते च अखिलाः सकलाः आम्नायाः सिंहासनाः तेषां जननी प्रसवित्री तां ॥ कश्च कादिमतश्च हश्च हादिमतश्च सश्च सादिमतश्च ते तन्मया एव मनवः मंत्राणि ते एव रूपं शरीरं यस्याः सा ताम् ॥ अकुलात् ब्रह्मरन्ध्रस्यगुरुमण्डलात् कुलं मूलाधारस्थकुण्डलिनीं पुनः कुलात् अकुलं तदेव मार्ग-स्तस्मिन् अभ्यसनिनी अटन्ती तां आरोहावरोहक्रमगां कुल कुण्डलिनीं गुरुसमष्टिरूपामित्यर्थः ॥ हश्च निश्वासश्च ठश्च उच्छ्वासश्च तयोः आचारः क्रियाभ्यासः तैः ॥ लभ्यां प्राप्यां त्रयश्च ते पन्थानः तैः गच्छतीति तां इडापिङ्गलासुषुम्णा-नाडीत्रयसंचारिणीमित्यर्थः ॥ हकारार्द्धां सार्द्धां समाधौ प्रासादबीजस्योभयात्तररूपिणीं अतएव केवल सच्चेतन्य-प्रकाशविमर्शात्मिकामित्यर्थः ॥ सा गुरुमुखादेवावगन्तव्या ॥ महापञ्चप्रेताः पृथ्व्यात्मकब्रह्मा च, जलात्मकविष्णुश्च, तैजसा-त्मकरुद्रश्च, वाय्वात्मकेश्वरश्च, आकाशात्मकसदाशिवश्च ते एव पञ्चमहाप्रेताः तेषां उपरि रुचिरं मनोहरं सिंहासनं पीठं तस्मिन् गतां स्थितां ॥ सगुणभावेन ब्रह्मविष्णुरुद्रेश्वराः मञ्चखुररूपाः सदाशिवश्च फलकरूपः एवं तैर्निर्मितसिंहा-सनोपरि श्रीमन्महात्रिपुरसुन्दरी जयति ॥ निर्गुणभावेन पृथ्व्य-

पृतेजोवाय्वाकाशात्मकपञ्चमहाभूतानि कवलीकृत्वा साक्षात् ब्रह्मचैतन्यरूपिणी श्रीमन्महात्रिपुरसुन्दरी जयति ॥ योगाभ्यासमते पञ्चभूतात्मकमूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्ध्युपरि इडापिङ्गलासुषुम्णानाडित्रयस्पन्दिरूपाज्ञाचक्रे परमात्मरूपिणी श्रीमन्महात्रिपुरसुन्दरी विराजति इति भावः ॥ सहस्रं आदित्याः सूर्य्याः तेषां आभा इव आभा कान्तिर्यस्या सा तां सगुणभावे सहस्रार्कवत् तेजस्विनीं अरुणवर्णां निर्गुणभावे प्रकाशान्तर्गतविमर्शरूपिणीं ॥ जितं तिरस्कृतं मदनस्य कामदेवस्य रूपं स्वरूपं यया सा तां सगुणभावे अतीव सुन्दरीं निर्गुणभावेतु मदन एव सकलप्राणिनः उत्पत्तिकारणमुच्यते, तस्य रूपमेव सकलजगत्सृष्टिहेतुः तां विश्वानुग्रहकर्त्रीं इत्यर्थः ॥ युवतीं तरुणीं निर्गुणभावे च युवती एव गर्भवती भवति न तु वृद्धा बालिका च तस्मात् विश्वं पुनः बहिर्निस्सारणोद्यतामिति भावः ॥ त्रीणि नेत्राणि नयनानि यस्य तत् तदेव आस्यं वदनं यस्याः सा तां सूर्येन्द्वग्न्यात्मक नयनत्रययुक्तमुखीं निर्गुणभावे पूर्वोक्तबिन्दुत्रयसमष्टिरूपिणीं कामकलात्मिकां इति भावः ॥ मन्द्रहसनां मन्द्रं गभीरं हसनं हास्यं यस्याः सा तां आनन्दाद् हर्षाद् वा नरो हसति तस्मात् कारणात् मन्द्रहसनां निर्गुणभावे आनन्दरूपां इति भावः ॥ निशानाथः चन्द्रः एव उत्तंसः शिरोभूषणं यस्याः सा ताम् सगुणभावे अर्द्धचन्द्रमुकुटां निर्गुणभावे तु चन्द्रः एव अमृतरूपः तस्मात्कारणात् निशानाथोत्तंसां परमामृतस्वरूपिणीं अतएव विश्वम्भरां ॥ अरुणं रक्तं वसनं वस्त्रं यस्याः सा तां सगुणभावे रक्तवस्त्रधरां निर्गुणभावे तु अरुणः एव सूर्य्यः अतएव तेजः पुञ्जः स एव (आच्छादन) वस्त्रं यस्याः सा, प्रकाशेन आच्छादितविमर्शशक्तिरितिभावः ॥ पाशश्च रज्जुश्च अङ्कुशश्च सृणिश्च कुसुमबाणाश्च पञ्चपुष्पशराश्च ऐक्षवं च इक्षुचापश्च तेषां धरा दधती तां सगुणभावे

पाशांकुशपुष्पबाणेक्षुचापं भुजचतुष्कैः धृतां निर्गुणभावे तु पाश एव जगद्वशीकरणत्वं अंकुश एव जगत्स्तम्भनत्वं कुसुमबाणाश्च शोषणमोहनसन्दीपनतापनमादनाः पञ्चबाणा एव जगज्जृम्भणत्वं ऐक्षवधनुः एव जगन्मोहनत्वं तत्सर्वधारणत्वाद् तत्सर्वाधीनकृतां इति भावः ॥ श्री इत्याकारं यत्पदं तेन युतां ॥ त्रिपुरललितां त्रिपुरसुन्दरीं ॥ त्रयाणां पुराणां शुक्लारुणमिश्रचैन्दवात्मकस्थूलसूक्ष्मकारणदेहानां समाहारः तस्य ललिता अथवा सुन्दरी शक्तिः जगदादिकारणीशक्तिरिति भावः ॥ श्रीपदयुतां त्रिपुरललितां एवं श्रीमन्महात्रिपुरसुन्दरीं ॥ अहं भजे शिवप्रिये ॥

## तत्र शास्त्रवचनप्रमाणम्

"सूर्येन्द्वग्निमयैकपीठनिलयां बालार्कबिम्बारुणां ।
ध्यायेत्तां चन्द्रकलावतंसमुकुटां पीनस्तनीं सुन्दरीम् ॥
पाशं चाङ्कुशमिक्षुचापविधृतां पुष्पेषुहस्तां परां ।
नानाभूषणभूषिताङ्गिसुकुमाराङ्गीं भजे चैन्दवे ॥" इति आगमवचनम् ।

"जगद्व्यापकवर्ती मायां मोहयन्तीं सुरासुरान् ।
अरूपां रूपिणीभूतां सुन्दरीं कथयामि ते ॥
पद्मरागप्रतीकाशा कुंकुमोदकसन्निभा ।
सुभ्रूर्वाच्या सुनेत्रा च सुस्तनी चारुहासिनी ॥
कृशमध्या चतुर्बाहुः खण्डेन्दुकृतशेखरा ।
चित्रेत्रा सर्वभूषाढ्या चारुवेशा मनोरमा ॥
पाशाङ्कुशेक्षुचापं च पञ्चबाणधनुर्धरा ।
ब्रह्मा विष्णुश्च रुद्रश्च ईशानमञ्चपादकाः ॥
सदाशिवाख्यपर्यङ्के संस्थिता परमेश्वरी ।
पराशक्तिः सुन्दरीति त्रिपुरेशीति गीयते ॥

महामोक्षप्रदा देवी परब्रह्मस्वरूपिणी ।
बहुभेदा विशालाक्षा बहुरूपाप्रकाशिनी ॥" इति
श्रीपरातन्त्रवचनम् ।
॥ ३० ॥ ॥ ३१ ॥

कदाचिद्बिन्दूनां विविधललनासारमथनात्
सुषट्कोणं स्पष्टं वसुदलयुतं रम्यकमलम् ॥
चतुर्द्वारोपेतं यदि भवति यन्त्रं परशिवे
तदा योगेशी त्वं भवति किल वज्रेतिपदयुक् ॥३२॥

अन्वयः — हे परशिवे कदाचित् बिन्दूनां विविधललनासारमथनात् स्पष्टं सुषट्कोणं वसुदलयुतं रम्यकमलम् चतुर्द्वारोपेतं यन्त्रं यदि भवति तदा त्वं वज्रेतिपदयुक् योगेशी भवसि ॥

॥ व्याख्या — हे परशिवे ! कदाचित् कस्मिंश्चित् समये ॥ बिन्दूनां पूर्वोक्तशुक्लारुणमिश्रबिन्दूनां ॥ विविधललनासारमथनात् पूर्वोक्तवत् ॥ स्पष्टं व्यक्तं ॥ सुषट्कोणं षडस्रं ॥ वसुदलयुतं अष्टपत्रयुक्तं ॥ रम्यकमलं ललितपद्मं ॥ चतुर्द्वारोपेतं भूपुरचक्रयुतं ॥ यन्त्रं चक्रं ॥ यदि यस्मिन्काले ॥ भवति तद्रूपतां याति ॥ तदा तस्मिन्काले ॥ त्वं ॥ वज्रेतिपदयुक् योगेशी वज्रयोगेशी वज्रयोगिनीरूपा ॥ भवसि असि ॥

तत्र शास्त्रवचनप्रमाणम्

"पूर्वोक्ते पूजयेत्पीठे पद्मे षट्कोणकर्णिके ।
धरा गृहा वृते रम्ये देवीं रम्योपचारकैः ॥" इति
पञ्चत्युक्तागमवचनम् ।
॥ ३२ ॥

पुरोक्ताम्नायेभ्यः प्रभवदधराम्नायविषये
परे वज्रा भूत्वा लषसि भुवने चीनमतगा ॥
तदाऽक्षोभ्याकारः प्रभवति परो नागतनुमान्
षडाम्नायाश्चेत्थं गिरिशरसवक्त्रैः समुदिताः ॥ २३

अन्वयः — (हे) परे ! पुरोक्ताम्नायेभ्यः प्रभवदधराम्नायविषये (यदा) भुवने चीनमतगा वज्रा भूत्वा (त्वं) लषसि । तदा परः नागतनुमान् अक्षोभ्याकारः प्रभवति । इत्थं षडाम्नायाश्च गिरिशरसवक्त्रैः समुदिताः ॥

व्याख्या — हे परे ! पुरोक्ताम्नायेभ्यः पूर्वोदितपञ्चाम्नायेभ्यः ॥ प्रभवन् जायमानः एषं अधराम्नायविषयस्तस्मिन् ॥ (यदा) भुवने विश्वस्मिन् ॥ चीनमतगा चीनक्रमेणाचर्या ॥ वज्रा वज्रयोगिनीरूपा ॥ भूत्वा ॥ लषसि भासि ॥ तदा तस्मिन्काले ॥ परः परशिवः ॥ नागतनुमान् नागशरीरी ॥ अक्षोभ्याकारः अक्षोभ्यरूपः ॥ प्रभवति जायते ॥ इत्थं एवं ॥ गिरिशस्य शिवस्य रसाः (षट्) वक्त्राणि मुखानि तैः ॥ समुदिताः सम्यग्युक्ताः ॥

## तत्र शास्त्रवचनप्रमाणम्

"शृणु त्वमधराम्नायं सावरी जीनमातृका ।
अशेषकर्म्मनिर्माणा कलौ शीघ्रफलप्रदा ॥
बौद्धमार्गनिरातङ्का ॥ चीनमार्गेण पूजिता ।
आम्नायान्तरसाराणी ख्याता सा वज्रयोगिनी ॥ इति
श्रीपरातन्त्रवचनम् ।

"योगिनी वज्रपूर्वा च पत्नगी नैऋतेश्वरी ।
अधराम्नायपीठस्था जैनमार्ग प्रपूजिता: ॥" इति
श्रीवडवानलतन्त्रवचनम् ।

"निशामया धराम्नाय गोचरान् देवतामनुन् ।
यत्राऽऽद्यभूता विख्याता भीमा देवी भयानका ॥" इति
श्रीमहाकालसंहितावचनम् ।

॥ ३३ ॥

अधः पद्मे वज्रां त्रिवदनयुतां मुक्तचिकुराम्
सुरत्नाढ्यां सिंहाजिनमभिदधानामरुणभाम् ॥
कपालं खट्वाङ्गं डमरुमपि कर्त्रीं श्रुतिकरै-
र्धृतां त्वामीडेऽहं मनसि शवगां नृत्यचरणाम् ॥३४

अन्वयः — अधः पद्मे त्रिवदनयुतां मुक्तचिकुरां सुरत्नाढ्यां सिंहाजिनं अभिदधानां अरुणभां श्रुतिकरैः कपालं खट्वाङ्गं डमरुं कर्त्रीं अपि धृतां शवगां नृत्यचरणां वज्रां त्वां अहं मनसि ईडे ॥

व्याख्या — अधः पद्मे अधराम्नाये ॥ त्रीणि च तानि वदनानि मुखानि तैः युता युक्ता तां ॥ मुक्ताः [illegible] विकीर्णाः चिकुराः केशाः यस्याः सा तां ॥ शोभनानि च तानि रत्नानि [illegible] आढ्या पूर्णा तां ॥ सिंहस्य केशरिणः अजिनं चर्म ॥ अभिदधानां विभ्राणां ॥ अरुणा रक्ता भाः कान्तिः यस्याः सा तां ॥ श्रुतिपरिमिताः चतुष्काः कराः भुजाः तैः ॥ कपालं महा-

शङ्खपात्रं ॥ खट्वाङ्गं तदायुधं ॥ डमरुं वाद्यविशेषं ॥ कर्त्रीं तन्नामायुधं ॥ अपि ॥ धृतां दधानां ॥ शवगां शवासिनां ॥ नृत्यप्रयुक्तौ नर्तनप्रयुक्तौ चरणौ पादौ यस्याः सा तां ॥ वज्रां वज्रयोगिनीरूपां ॥ त्वां ॥ अहं ॥ मनसि ॥ ईडे स्तौमि ॥

## तत्र शास्त्रवचनप्रमाणम्

"त्रिवक्त्रा [illegible] शवासना ।
त्रिनेत्रा मण्डलम्बीत हाराभरणभूषिता ॥
मुण्डमालाविभूषाङ्गी व्यालयज्ञोपवीतिनी ।
व्याघ्रचर्माम्बरा देवी सिंहचर्मोत्तरीयका ॥"
"योगिनी श्रीवज्रपूर्वा वज्रघण्टेश्वरप्रिया ।
चतुर्भुजा [illegible] शिरोरुहा ॥
कर्त्रीं कपालं खट्वाङ्गं डमरुं बिभ्रती करैः ।
इहैव फलदा नित्या [illegible]वर्गफलप्रदा ॥" इति श्रीपरातन्त्रवचनम् ।

॥ ३४ ॥

महीमूलाधारे श्रुतिदलयुतं स्वर्णकमलम्
धरातत्त्वोत्पन्नं लपति सुतलाम्नायविभवम् ।
पुनः स्वाधिष्ठाने रसदलयुतं रक्तकमलम्
सुपूर्वाम्नायाढ्यं तपति दहनांशोपजनितम् ॥ ३५ ॥

॥ अन्वयः ॥ महीमूलाधारे श्रुतिदलयुतं धरातत्त्वोत्पन्नं स्वर्णकमलं लपति । पुनः स्वाधिष्ठाने रसदलयुतं सुपूर्वाम्नायाढ्यं दहनांशोपजनितं रक्तकमलं तपति ॥

व्याख्या — महीमूलाधारे मूलाधारचक्रे ॥ श्रुतिदलयुतं चतुः पत्रयुक्तं ॥ धरातत्वोत्पन्नं पृथ्वीतत्वोद्भूतं ॥ स्रुतलाम्नायविभवं अधराम्नायात्मकं ॥ स्वर्णकमलं हिरण्यवर्णपद्मं ॥ लषति प्रकाशते ॥ पुनः भूयः ॥ स्वाधिष्ठाने लिङ्गमूलचक्रे ॥ रसदलयुतं षट्पत्रयुक्तं ॥ सुपूर्वाम्नायाख्यं पूर्वाम्नायात्मकं ॥ दहनांशोपजनितं तेजस्तत्वोद्भूतं ॥ रक्तकमलं विद्रुमाभपद्मं ॥ तपति विलषति ॥ मतान्तरे स्वाधिष्ठानचक्रं जलतत्वात्मकं, मणिपूरकचक्रं तेजस्तत्वात्मकं अपि दृश्यते ॥

## तत्र शास्त्रवचनप्रमाणम्

"गुदाच्च द्व्यङ्गुलादूर्ध्वं मेढ्राच्च द्व्यङ्गुलादधः ।
मूलाधारमिदं प्रोक्तं पीतवर्णञ्चतुर्दलम् ॥" इति
श्रीयोगसारतन्त्रवचनम् ।

"स्वाधिष्ठानाह्वयं चक्रं लिङ्गमूले षडारकम् ।
वालार्कं वर्णपृष्ठादि षडक्षरसमन्वितम् ॥" इति च
श्रीयोगसारतन्त्रवचनम् ।

॥ ३५ ॥

शुभे नाभिस्थाने दशदलयुतं नीलकमलं
पयस्तत्वोत्पन्नं विलषति यमाम्नायनिलयम् ॥
हृदन्ते पीताभं रविदलयुतं पद्ममपरम्
प्रतीच्याम्नायाख्यं किल पवनतत्वात् प्रकटितम् ॥ ३६

अन्वयः — शुभे नाभिस्थाने दशदलयुतं पयस्तत्वोत्पन्नं यमाम्नायनिलयं नीलकमलं विलषति । हृदन्ते पीताभं

रविदलयुतं प्रतीच्याम्नायाख्यं पवनतत्वात् प्रकटितं अपरं पद्मं किल (विलषति)।

व्याख्या — शुभे शोभने ॥ नाभिस्थाने मणिपूरकचक्रे॥ दशदलयुतं दिक्पत्रयुक्तं ॥ पयस्तत्वोत्पन्नं जलतत्वोद्भूतं ॥ यमाम्नायनिलयं दक्षिणाम्नायात्मकं ॥ नीलकमलं नीलवर्णोत्पलं ॥ विलषति प्रकाशते ॥ हृदन्ते अनाहतचक्रे ॥ पीताभं पीतवर्णम् ॥ रविदलयुतं द्वादशपत्रयुतं ॥ प्रतीच्याम्नायाख्यं पश्चिमाम्नायात्मकं ॥ पवनतत्वात् वायुतत्वात् ॥ प्रकटितं उत्पन्नं ॥ अपरं अन्यत् ॥ पद्मं कमलं ॥ किल ॥ (विलषति)॥ षडन्वयशांभवविद्यायां तु अनाहतचक्रं उत्तराम्नायात्मकं विशुद्धिचक्रं पश्चिमाम्नायात्मकं भवति ॥ एतत्कारणं गुरुमुखादेवावगन्तव्यं ॥

## तत्र शास्त्रवचनप्रमाणम्

"नाभिदेशे स्थितं चक्रं दशारमणिपूरकम्।
नीलप्रभाण्डादिवर्णैर्दशभिः समलङ्कृतम् ॥" इति
"द्वादशारं महाचक्रं हृदयेनाहताह्वयम्।
क्रोधीशाद्यक्षरोपेतं पीतवर्णं समुज्वलम् ॥" इति च
श्रीयोगसारतन्त्रवचनम्।

॥ ३६ ॥

विशुद्धौ धूम्राभं नलिनमपरं षोडशदलं
कुबेराम्नायाख्यं विलषति खतत्वात् प्रजनितम् ॥
महाज्ञाभ्र मध्ये द्विदलयुतपङ्केरुहमथो
महोदर्ध्वाम्नायाख्यं तडिदिवलषद्भाति रुचिरम्॥३७

अन्वयः — विशुद्धौ धूम्राभं षोडशदलं कुबेराम्नायाख्यं खतत्वात् प्रजनितं अपरं नलिनं विलषति। अथो महाज्ञाभ्रू मध्ये महोदूर्ध्वाम्नायाख्यं तडित् इव लषत् रुचिरं द्विदलयुतपङ्केरुहं भाति॥

व्याख्या — विशुद्धौ विशुद्धिचक्रे॥ धूम्राभं धूम्रवर्णोपेतं॥ षोडशदलं षोडशपत्रयुतं॥ कुबेराम्नायाख्यं उत्तराम्नायात्मकं॥ खतत्वात् आकाशतत्त्वात्॥ प्रजनितं प्रकटीकृतं॥ अपरं अन्यत्॥ नलिनं कमलं॥ विलषति भाति॥ अथो अनन्तरं॥ महाज्ञायाः आश्रयभूतः योभ्रू मध्यस्तस्मिन् महाज्ञाभ्रू मध्ये आज्ञाचक्रे॥ महोदूर्ध्वाम्नायाख्यं ऊदूर्ध्वाम्नायात्मकं॥ तडित् इव विद्युत् इव॥ लषत् प्रकाशमानं॥ तडिदिव लषत् विद्युद्वर्णाभं इति भावः॥ रुचिरं मनोहरं॥ द्विदलयुतपङ्केरुहं द्विपत्रकमलं॥ भाति विलषति॥

## तत्र शास्त्रवचनप्रमाणम्

"कण्ठदेशे विशुद्धाख्यं यश्चक्रं षोडशारकम्।
धूम्रप्रभं षोडशभिः श्रीकण्ठादिस्वरैर्युतम्॥" इति
"आज्ञा नाम भ्रुवोर्मध्ये द्विदलं चक्रमुत्तमम्।
अन्त्यवर्णद्वयोपेतं विद्युत्कान्ति समद्युतिम्॥" इति च
श्रीयोगसारतन्त्रवचनम्।

॥ ३७ ॥

सुकर्पूरश्वेतं रुचिरसकलाम्नायविभवम्
त्रिकोणाकारेण ह्यकथशुभवर्णाद्यमुदरे॥
सहस्रारं पद्मं तदुदरत एवाङ्घ्रियुगलम्
परे दीपाकारा तदुपरि विशुद्धा विलषसि॥३८॥

अन्वयः — (हे) परे ! सुकर्पूरश्वेतं रुचिरसकलाम्नायविभवं उदरे त्रिकोणाकारेण अकथशुभवर्णाढ्यं सहस्रारं पद्मं (वर्तते) ॥ तदुदरतः एव अंघ्रियुगलं (विराजते) ॥ तदुपरि विशुद्धा दीपाकारा त्वं विलषसि ॥

व्याख्या — हे परे ! शोभनश्चासौ कर्पूरः घनसारः स इव श्वेतं शुभ्रं ॥ रुचिराः शोभनाः च ते सकलाम्नायाः ते एव विभवाः ऐश्वर्याणि यस्य तत् अत एव षडाम्नायात्मकं इत्यर्थः ॥ उदरे तन्मध्ये कर्णिकायां इति भावः ॥ त्रिकोणाकारेण त्र्यस्राकारेण ॥ अकथा अकथमातृकाः ते च ते शुभाश्च ते वर्णाः अक्षराणि तैः आढ्यं परिपूर्णं ॥ सहस्रारं सहस्रदलयुतं ॥ पद्मं कमलं ॥ (वर्तते इति शेषः) ॥ तदुदरतः तत्कर्णिकायामेव ॥ अङ्घ्रियुगलं गुरुपादुकाद्वयं विराजते इति शेषः ॥ तस्य उपरि ऊर्ध्वदेशे ॥ विशुद्धा निर्मला ॥ दीपाकारा दीपशिखारूपिणी ॥ त्वं ॥ विलषसि प्रकाशसे ॥

## तत्र शास्त्रवचनप्रमाणम्

"सहस्रारं महापद्मं विसर्गाधः प्रतिष्ठितम् ।
अधोमुखं सर्ववर्णयुक्तमारक्तकेशरम् ॥" इति
श्रीयोगसारतन्त्रवचनम् ।

"सहस्रदलपङ्कजे सकलशीतरश्मिप्रभम् ।" इति
श्रीकुलार्णवतन्त्रवचनम् ।

"त्रिकोणमध्ये गुरुमूर्तिमीडे ।" इति
"परादीपाकारा निखिलभुवनाधारजननी ॥" इति च
आगमवचनम् ।

॥ ३८ ॥

अधस्त्वं स्त्रीबीजं यमदिशि च कुन्ती परशिवे
प्रतीच्यां वै मातः स्मरहरनुते खेचरिणिका ॥
उदीच्यां रावाख्यं पुरसि हि सुलज्जाख्यमतुलं
महोदूर्ध्वे प्रासादस्त्वमसि हि सदैका त्रिभुवने ॥२६

अन्वयः — हे स्मरहरनुते परशिवे मातः ! त्वं अधः स्त्रीबीजं (असि) यमदिशि च कुन्ती (बीजं असि), प्रतीच्यां वै खेचरिणिका (असि), उदीच्यां रावाख्यं (असि), पुरः अतुलं सुलज्जाख्यं (असि), महोदूर्ध्वे प्रासादः (असि) । सदा त्वं हि इह त्रिभुवने एका असि ।

व्याख्या — हे स्मरहरनुते शिवस्तुते ! परशिवे विमर्शरूपे ! मातः जननि ! त्वं ॥ अधः अधस्तनाम्नाये स्त्रीबीजं वधूबीजरूपा (असि) ॥ यमदिशि दक्षिणाम्नाये ॥ कुन्ती (बीजं) काली बीजरूपा (असि) ॥ प्रतीच्यां पश्चिमाम्नाये ॥ वै ॥ खेचरिणिका खेचरीबीजरूपा (असि) ॥ उदीच्यां उत्तराम्नाये ॥ रावाख्यं गुह्याबीजरूपा (असि) ॥ पुरः पूर्वाम्नाये ॥ अतुलं अनुपमेयं उत्तममित्यर्थः ॥ सुलज्जाख्यं मायाबीजरूपा (असि) ॥ महोदूर्ध्वे ऊर्ध्वाम्नाये ॥ प्रासादः श्रीपराप्रासाद बीजरूपा (असि) ॥ (किन्तु) सदा सर्वदा ॥ त्वं ॥ हि एव ॥ इह अस्मिन् ॥ त्रिभुवने त्रिलोके ॥ एका अद्वितीया ॥ असि वर्तसे ॥ एवं सकलमन्त्रसंकेताः गुरुवक्त्रादेवावगन्तव्याः ॥

तत्र शास्त्रवचनप्रमाणम्

"संवर्गे धर्मार्थकामास्ते च शक्त्यात्मकाः प्रिये
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥

या सा तु मातृका लोके परतेजःसमन्विता ।
तया व्याप्तमिदं सर्वमाब्रह्मभुवनात्मकम् ॥ इति श्रीतन्त्रराजवचनात् ॥

॥ ३६ ॥

सुपूर्वे संकेता भगवति चतुर्विंशतिरथो
प्रतीच्यां द्वात्रिंशज्जननि मनुभेदास्तव परे ॥
उदीच्यां षट्त्रिंशज्जगति मनुसंकेतनिवहा
अवाच्यां वर्तन्ते किल शरयुताविंशतिरपि ॥ ४७ ॥

अन्वयः — हे जननि भगवति परे ! जगति तव सुपूर्वे चतुर्विंशतिः संकेताः, प्रतीच्यां द्वात्रिंशत् मनुभेदाः, उदीच्यां षट्त्रिंशत् मनुसंकेतनिवहाः, अवाच्यां शरयुताः विंशतिः (संकेताः) अपि किल वर्तन्ते ।

व्याख्या — हे जननि मातः ! भगवति षडैश्वर्यवति ! परे विमर्शरूपे ! जगति विश्वगोले ॥ तव ते ॥ सुपूर्वे पूर्वाम्नाये ॥ चतुर्विंशतिः चतुर्विंशतिसंख्यकाः ॥ संकेताः नामध्यानमन्त्रयन्त्रावरणपूजाभेदाः (वर्तन्ते इति शेषः) ॥ प्रतीच्यां पश्चिमाम्नाये ॥ द्वात्रिंशत्संख्यकाः ॥ मनुभेदाः ध्यानमन्त्रयन्त्रावरणपूजाभेदाः (वर्तन्ते इति शेषः) ॥ उदीच्यां उत्तराम्नाये ॥ षट्त्रिंशत्संख्यकाः ॥ मनुसंकेतनिवहाः नामध्यानमन्त्रयन्त्रावरणपूजाभेदाः (वर्तन्ते इति शेषः) ॥ अवाच्यां दक्षिणाम्नाये ॥ शरयुताः विंशतिः पञ्चविंशतिसंख्यकाः ॥ अपि (एतदव्ययं नाम ध्यानमन्त्रयन्त्रावरणपूजाभेदा इति भावार्थस्यापि नियोजितम्) ॥ किल निश्चयेन ॥ वर्तन्ते भवन्ति ॥

## तत्र शास्त्रवचनप्रमाणम्

"पूर्वाम्नायस्य संकेताश्चतुर्विंशतिरीरिताः ।
दक्षिणाम्नायसंकेता पञ्चविंशतिरीरिताः ॥
पश्चिमाम्नायसंकेता द्वात्रिंशत् समुदाहृताः ।
विदुः षट्त्रिंशदाम्नाये संकेताः श्रीमदुत्तरे ॥
ऊर्ध्वाम्नायस्य चैतानि न सन्ति कुलनायिके ।
साक्षाच्छिवस्वरूपत्वान्न किञ्चित् कर्म विद्यते ॥" इति
श्रीकुलार्णवतन्त्रवचनम् ।

"जया जयन्ती विजया अजिता नारसिंहिका ।
व्याघ्रेश्वरी कराला च राजेशी भुवनेश्वरी ॥
रक्तदन्ता विशालाक्षी कामेशी भुवनेश्वरी ।
विद्युज्जिह्वा डामरेशी नादेशी नृत्यनायिका ॥
नन्दी चैव महाकाल भृङ्गानी च कुलालिका ।
नर नादेश्वरी तत्र चतुः पञ्चरसान्विता ॥
बहुभेदा देवदेवी भैरवाष्टकमातृका ।
नाटेश्वरेति विख्यातो भैरवश्चक्रपालकः ॥
क्षेत्रविघ्नेशवटुकयोगिनीमातृकाष्टकाः ।
ब्रह्माण्याद्याः प्रपूज्यन्ते कुमारी कामदा सदा ॥
नृत्यमाने पुरा देवि भैरवो मातृभिर्वृतः ।
नृत्यभैरवनामा तु पूर्वचक्रे व्यवस्थितः ॥" इति
"जंभिनी स्तम्भिनी तारा मोहिनी अन्धिनी शिवा ।
मृत्युञ्जया चर्चिका च सिंही दक्षिणकालिका ॥
प्रचण्डी डमरीडा च उग्रतारा कपालिनी ।
त्वरिता छिन्नशीर्षा च वगला वाक्प्रदायिनी ॥
नीला कर्दम्बाली भीमा त्रैलोक्यडामरेश्वरी ।
त्रैलोक्यविजया चण्डी [illegible] भैरवी ॥

दक्षिणाम्नायदेवेशि नानाभेद विसारिणी ।" इति च
"तत्रैव बहुभेदास्ति कुब्जिका कुलमार्गगा ॥
विभिन्ना सिद्धिनाथेन श्रीनाथेनावतारिता ।
कुजेशनाथवीरेण कुब्जाम्नायः प्रकाशिता ॥
नवात्मा श्रीशिखानाथः स्वच्छन्द ललितेश्वरः ।
कमेशी च त्रिखण्डा च महत्तारि त्रिखण्डका ॥
त्रिशुद्धि उग्रचण्डी च चण्डा चण्डकपालिका ।
अन्नपूर्णा कराली च ज्वालामालिनि कामिनी ॥
ब्राह्मचाद्यामातरगणा असिताङ्गादिभैरवा ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुण्डी सप्तमी स्मृता ।
अष्टमी च महालक्ष्मी एताः अत्रैव पूजिता ॥
असिताङ्गो रुरुश्चण्डः क्रोधीशोन्मत्तकस्तथा ।
कपाली भीषणाख्यश्च संहारश्चाष्टमस्तथा ॥
षडाम्नाय प्रपूज्याथै मातृका सह भैरवैः ॥" इति च
। श्रीवीरातन्त्रवचनम् ।

॥ ४० ॥

सदायोन्याकारात् सकलजगतां हंसगमयात्
सनादब्रह्मत्वात् परमशिवशक्त्याकृतिमयात् ॥
समष्ट्याकृत्या वै निखिलमनुरूपात् तव परे
न कश्चित् संकेतो भवति भुवि ह्युद्धरीसनमते ॥४१

अन्वयः — हे परे ! सकलजगतां सदा योन्याकारात्
हंसगमयात् सनादब्रह्मत्वात् परमशिवशक्त्याकृतिमयात् वै

निखिलमनुरूपात् ऊद्ध्र्वासनमते भुवि तव कश्चित् हि संकेतः न भवति ॥

व्याख्या — हे परे ! सकलानि निखिलानि च तानि जगन्ति लोकाः तेषां ॥ सदा सर्वदा ॥ योन्याकारात् कारणस्वरूपात् ॥ हंसगमयात् सकलजीवसाक्षिभूतत्वात् ॥ सनादब्रह्मत्वात् नादब्रह्मस्वरूपत्वात् ॥ परमशिवशक्त्याकृतिमयात् प्रकाशविमर्शमयरूपत्वात् ॥ निखिलमनुरूपात् सकलमहामन्त्रस्वरूपत्वात् ॥ ऊद्ध्र्वासनमते ऊद्ध्र्वाम्नाये ॥ भुवि लोके ॥ तव ते ॥ कश्चित् हि कश्चनोऽपि ॥ संकेतः यन्त्रावरणपूजादिभेदः ॥ न भवति न विद्यते ॥

## तत्र शास्त्रवचनप्रमाणम्

"शब्दब्रह्मपरब्रह्मरूपिणी परमेश्वरी ।
शब्दब्रह्मविजानीही साक्षाद्वर्णस्वरूपिणी ॥
षोडशार्णा महादेवी वाच्यरूपेण संस्थिता ।
तुरीया सा महाविद्या साक्षाज्जाग्रत्स्वरूपिणी ॥
वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ।
वर्णितुं नैव शक्येयं श्रीविद्याषोडशाक्षरी ॥
महाविद्यास्वरूपा सा भुक्तिमुक्तिफलप्रदा ।
एकोच्चारेण देवेशि राजसूयस्य कोटयः ॥
षोडशार्णा महाविद्या न प्रकाश्या कदाचन ।
विना गुरुप्रसादेन श्रीविद्याषोडशाक्षरी ॥
हृष्टः प्रजाप्यते यस्तु सभुक्तो योगिनीगणैः ।
श्रीगुरोः कृपया लब्धा न प्रकाश्या कदाचन ॥" इति
श्रीपरातन्त्रवचनम् ।

"अपि प्रियतमे देयं सुतदारधनादिकम् ।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी ॥
सप्तलक्षं महाविद्यास्तन्त्रादौ कथिताः प्रिये ।
सारात् सारतरा चेयं महाविद्या सुगोपिता ॥" इति
श्रीज्ञानार्णवतन्त्र वचनम् ।

॥ ४१ ॥

अधश्चीनाचर्या त्वं यमदिशि कुलाऽऽगारललना-
प्रसन्ना वै पूर्व्वे मनुजपवलाच्चोत्तरदिशि ॥
शिवावल्यचर्याऽद्ये सुममममयैः पश्चिमदिशि
स्फुरस्यूद्र्ध्वे मातः कुलजमनसि न्याससहितैः ॥४२

अन्वयः — हे मातः आद्ये ! त्वं अधः चीनाचर्या, यमदिशि कुलागारललना प्रसन्ना, पूर्व्वे वै मनुजपवलात् (प्रसन्ना), उत्तरदिशि च शिवावल्यचर्या, पश्चिमदिशि सुममममयैः (प्रसन्ना), ऊद्र्ध्वे न्याससहितैः (प्रसन्ना) (भूत्वा) कुलजमनसि स्फुरसि ।

व्याख्या — हे मातः जननि ! आद्ये आदिशक्ते ! त्वं ॥ अधः अधराम्नाये ॥ चीनाचर्या चीनक्रमेणार्चनैः योग्या वा प्रीता ॥ यमदिशि दक्षिणाम्नाये ॥ कुलागारललनात् कुलसन्ध्याविधानात् (कुलसन्ध्या तु गुरुवक्त्रादेवावगन्तव्या) प्रसन्ना सन्तुष्टा ॥ पूर्व्वे पूर्वाम्नाये ॥ वै निश्चयेन ॥ मनुजपवलात् मन्त्रजपकर्म्मणा (प्रसन्ना इति शेषः) ॥ उत्तरदिशि उत्तराम्नाये ॥ शिवावल्यचर्या शिवावलिविधिना संतुष्टा ॥ पश्चिम-

दिशि पश्चिमाम्नाये ॥ सुममममैः पञ्चमकारैः अत एव पञ्चमकारसंयुक्तार्चनविधिना संतुष्टा इत्यर्थः ॥ मननमंत्रमौनमनो (योग) मुद्राः एव दक्षाचाराणां पञ्चमकाराः वामानां तु मद्यमांसमत्स्यमैथुन (कुण्डगोलादि) मुद्राः एव पञ्चमकाराः इत्युच्यते ॥ ऊर्ध्वे ऊर्ध्वाम्नाये ॥ न्याससहितैः महाषोढादिविविधप्रकारन्यासैः सन्तुष्टा (भूत्वा इति शेषः) कुलजमनसि कुलीनानां चेतसि ॥ स्फुरसि प्रकाशसे ॥

## तत्र शास्त्रवचनप्रमाणम्

"न्यासप्रिया च श्रीविद्या कालिका मैथुनप्रिया ।
शिवावलिप्रिया गुह्या मांसासवप्रिया कुजा ॥
जपध्यानप्रिया देवी चोन्मनी मोक्षदायिनी ।
जपात् सिद्धिर्जपात् सिद्धिर्जपात् सिद्धिर्वरानने ॥" इति
श्रीबृहद्वडवानलतन्त्रवचनम् ।

"महाचीनक्रमाद्देवी तारिणी सिद्धिदायिनी ॥" इति
श्रीशक्तिसङ्गमतन्त्रवचनम् ॥

॥ ४२ ॥

परे दक्षाचारैः सुरजननि पूर्वे परशिवे
भवेद्वामाचारैरथ उत च ते पश्चिमदिशि ॥
उदीच्यूर्ध्वे दक्षे यजनमुभयाचारविभवै-
र्मुनिः सर्वाम्नाये यजतु सुकुलाचारविधिना ॥४३

अन्वयः — हे परे सुरजननि परशिवे ! पूर्वे दक्षाचारैः, अथ उत पश्चिमदिशि च, वामाचारैः, उदीचि (च)

ऊर्द्ध्वे (च) दक्षे (च) उभयाचारविभवैः ते यजन (भवेत्)।
मुनिः सर्वाम्नाये सुकुलाचारविधिना यजतु ॥

व्याख्या — हे परे चिद्घननिष्ठे! सुरजननि देवमातः! परशिवे विमर्शशक्ते ॥ पूर्वे पूर्वाम्नाये ॥ दक्षाचारैः दक्षिणाचारैः ॥ अधः अधराम्नाये ॥ उत पुनः ॥ पश्चिमदिशि पश्चिमाम्नाये ॥ वामाचारैः ॥ उदीचि उत्तराम्नाये ॥ ऊर्द्ध्वे ऊर्द्ध्वाम्नाये ॥ दक्षे दक्षिणाम्नाये ॥ उभयाचारविभवैः दक्षिणवामाचारमध्ये एकाचारैरित्यर्थः ॥ ते तव ॥ यजन पूजन (भवेदिति शेषः) ॥ मुनिः सिद्धः ॥ सर्वाम्नाये पूर्वोक्तनिखिलाम्नाये ॥ सुकुलाचारविधिना शुभकुलाचारविधानेन ॥ यजतु अर्चयतु ॥

## तत्र शास्त्रवचनप्रमाणम्

"पूर्वाम्नाये दक्षमार्गो वामः स्यात् पश्चिमे परे।
दक्षिणोत्तरयोरूर्ध्वे मार्गौ तौ वामदक्षिणौ ॥
विहाय सर्वं सर्वत्र कौलमार्गः प्रशस्यते ॥" इति
"योगात् पञ्चमकाराणां वामहस्तेन पूजनात्।
जपाद्धोमाच्च वामः स्याद्दक्षिणस्तद्विपर्ययात् ॥
तत्वतर्पणमन्त्रे तु वामहस्तेन दक्षिणे।
दक्षहस्तेन वामेऽपि विशेषः परिकीर्तितः ॥
दक्षवामक्रियायुक्तः कौलश्चोभयमिश्रितः ॥" इति च
श्रीवडवानलतन्त्रवचनम् ।

॥ ४३ ॥

सुभावो दक्षाणां भगवति भवेत् पाशवविधः
सुवामानां वीराभिधपरमभावो किल भवेत् ॥

महादिव्यो भावः कुलजनमते स्यात् त्रिभुवने
विना भावैर्मातस्त्वमिह न कदा तुष्यसि शिवे ॥४४

अन्वयः — हे मातः भगवति शिवे ! त्रिभुवने दक्षाणां पाशवविधः सुभावः भवेत् । सुवामानां किल वीराभिधपरमभावः भवेत् । कुलजनमते महादिव्यः भावः स्यात् । त्वं इह विना भावैः कदा न तुष्यसि ॥

व्याख्या — हे मातः जननि ! भगवति षडैश्वर्यवति ! शिवे कल्याणि ! त्रिभुवने त्रिलोके ॥ दक्षाणां दक्षिणाचाराणां ॥ पाशवविधः पाशवकल्पोक्तः ॥ सुभावः कल्पं पशुभावः इत्यर्थः ॥ भवेत् ॥ सुवामानां वामाचाराणां ॥ वीराभिधपरमभावः वीरकल्पं वीरभावः इत्यर्थः ॥ कुलजनमते कौलिकानां ॥ महादिव्यः दिव्यकल्पोक्तः भावः कल्पं दिव्यभावः इत्यर्थः ॥ स्यात् ॥ त्वं इह विना भावैः कदा (ऽपि) न तुष्यसि न हृष्टा भवसि ॥

## तत्र शास्त्रवचनप्रमाणम्

"भावस्तु त्रिविधो देव दिव्यवीरपशुक्रमात् ।
गुरवस्त्रिविधश्चात्र तथैव मन्त्रदेवताः ॥
शक्तिमन्त्रो महादेव विशेषान्मन्त्रसिद्धिदः ।
आद्यभावो महादेव श्रेयान् सर्वसमृद्धिदः ॥
द्वितीयो मध्यमश्चैव तृतीयः सर्वनिन्दितः ॥" इति
श्रीभावचूडामणितन्त्रवचनम् ।

॥४४॥

नरः पूर्व्वाम्नाये भजति मनुयोगैर्यदि परे
तदा सारूप्याख्यां जननि लभते मोक्षपदवीम् ॥
अवाच्याम्नाये त्वां स्मरति मनुजो भक्तिविधिना
तदा कालश्चासौ भ्रमति शिवरूपस्त्रिभुवने ॥४५

अन्वयः — हे परे जननि ! पूर्व्वाम्नाये यदि नरः मनुयोगैः (त्वां) भजति, तदा (सः) सारूप्याख्यां मोक्षपदवीं लभते । अवाच्याम्नाये (यदि) मनुजः भक्तिविधिना त्वां स्मरति, तदा असौ शिवरूपः कालः (सन्) त्रिभुवने भ्रमति ॥

॥ व्याख्या — हे परे ! जननि मातः ! पूर्व्वाम्नाये ॥ यदि ॥ नरः मनुजः ॥ मनुयोगैः मन्त्रयोगैः ॥ त्वां ॥ भजति उपास्ते ॥ तदा तर्हि ॥ (स नरः) सारूप्याख्यां मोक्षपदवीं सारूप्यमुक्तिं ॥ लभते प्राप्नोति ॥ अवाच्याम्नाये दक्षिणाम्नाये ॥ (यदि) मनुजः नरः ॥ भक्तिविधिना भक्तियोगैः ॥ (त्वां) स्मरति उपास्ते ॥ तदा तर्हि ॥ असौ एष मनुजः ॥ शिवरूपः कल्याणरूपः ॥ कालः महाकालभैरवोन्यः ॥ (सन्) त्रिभुवने त्रिलोके ॥ भ्रमति अटति ॥

## तत्र शास्त्रवचनप्रमाणम्

“दक्षिणोपासकः कालः कर्म्मः सायुज्यमाप्नुयात् ।
देवतायास्तथापूर्व्वः सारूप्यं लभते परम् ॥” इति
श्रीमेरुतन्त्रवचनम् ।
“मन्त्रयोगं विदुः पूर्व्वं भक्तियोगन्तु दक्षिणम् ॥” इति
श्रीकुलार्णवतन्त्रवचनम् ।

॥ ४५ ॥

उदीच्याम्नाये त्वां भजति यदि ज्ञानैकविधिना
सुसामीप्यं लब्ध्वा भवति स परे दिव्यतनुमान् ।
प्रतीच्याम्नाये त्वां यजति यदि सत्कर्मविभवै-
स्तदा नानाभोगैः सह विचरतीह क्षितितले ॥ ४६ ॥

अन्वयः — हे परे ! उदीच्याम्नाये (यदि) ज्ञानैकविधिना त्वां भजति, सः सुसामीप्यं लब्ध्वा दिव्यतनुमान् भवति । प्रतीच्याम्नाये यदि सत्कर्मविभवैः त्वां यजति, तदा इह क्षितितले नानाभोगैः सह विचरति ॥

व्याख्या — हे परे ! उदीच्याम्नाये उत्तराम्नाये ॥ यदि (अयं नरः) ॥ ज्ञानैकविधिना ध्यानयोगेन ॥ त्वां ॥ भजति उपास्ते ॥ सः (नरः) ॥ सुसामीप्यं सामीप्यमुक्तिं ॥ लब्ध्वा प्राप्य ॥ दिव्यतनुमान् दिव्यरूपः ॥ भवति जायते ॥ प्रतीच्याम्नाये पश्चिमाम्नाये ॥ यदि ॥ सत्कर्मविभवैः कर्मयोगेन ॥ त्वां ॥ यजति अर्चयति उपास्ते इति भावः ॥ तदा ॥ इह क्षितितले इह लोके ॥ नानाभोगैः विविधभोगैः ॥ सह सार्द्धं ॥ विचरति अटति ॥

तत्र शास्त्रवचनप्रमाणम्

"पश्चिमं कर्मयोगाख्यं ज्ञानयोगं तथोत्तरम् ॥" इति
श्रीकुलार्णवतन्त्रम् ।

"सामीप्यं चोत्तरे लोके पश्चिमं त्वैहिकं फलम् ॥" इति
श्रीमेरुतन्त्रम् ।

॥ ४६ ॥

यदि त्यागीभूत्वा भजति मनुजो मातरघरे
भवेऽन्यस्मिन् सोऽसौ विविधसुखमाप्नोति विपुलम् ॥
उपास्ते चोर्ध्वे यो भगवति सुगन्धर्वविधिना
कविः सिद्धो भोगी स हि भवति सायुज्यवशगः ॥४७

अन्वयः—हे भगवति मातः ! अघरे यदि मनुजः त्यागी भूत्वा (त्वां) भजति, सः असौ अन्यस्मिन् भवे विपुलं विविधसुखं आप्नोति । ऊर्ध्वे च यः सुगन्धर्वविधिना उपास्ते, स हि कविः सिद्धः भोगी सायुज्यवशगः भवति ॥

॥ व्याख्या ॥ हे भगवति षडैश्वर्यवति ! मातः जननि ! अघरे अघरास्नाये ॥ यदि ॥ मनुजः नरः ॥ त्यागी विरक्तो ॥ भूत्वा ॥ (त्वां) ॥ भजति उपास्ते ॥ सः असौ सः एषः नरः ॥ अन्यस्मिन् भवे जन्मान्तरे ॥ विपुलं अत्यन्तम् ॥ विविधसुखं नानानन्दं ॥ आप्नोति लभते ॥ ऊर्ध्वे ऊर्ध्वाम्नाये ॥ च ॥ यः (नरः) ॥ सुगन्धर्वविधिना गन्धर्वक्रमोत्तमराजाधिराजयोगेन ॥ उपास्ते भजति ॥ सः ॥ हि निश्चयेन ॥ कविः विद्वान् ॥ सिद्धः अणिमादि सिद्धियुतः ॥ भोगी विलासवान् ॥ सायुज्यवशगः सायुज्यमुक्तिप्राप्तः ॥ भवति जायते ॥

तत्र शास्त्रवचनप्रमाणम्

"लाभस्त्यागोक्षमार्गे दक्षिणे मार्गेऽप्युदर्कयुक् ॥" इति
आर्यवचनम्

"गन्धर्वाख्यक्रमेणैव सुन्दरी सिद्धिदायिनी ॥" इति
॥ ३४ ॥ आगमवचनम् ।

॥ ४७ ॥

अवैत्येकाम्नायं यदि कुलजनो भावसहितः
स मुक्तः स्याद्भुक्त्वा भुवि विविधभोगान् भगवति ॥
पुनः किं वक्तव्यं जननि चतुराम्नायविदुषः
महोद्र्ध्वाम्नायज्ञः कथमिह भवेत् स्तुत्य इतरैः ॥४८

अन्वयः — हे भगवति जननि ! यदि भावसहितः कुलजनः एकाम्नायं अवैति सः भुवि विविधभोगान् भुक्त्वा मुक्तः स्यात् । पुनः चतुराम्नायविदुषः किं वक्तव्यम् ? महोद्र्ध्वाम्नायज्ञः कथं इह इतरैः स्तुत्यः भवेत् ?

व्याख्या — हे भगवति षडैश्वर्यवति ! जननि मातः ! यदि ॥ भावसहितः पूर्वोक्तदिव्यवीरपशुभावमध्यैकभावयुतः ॥ कुलजनः कौलिकः ॥ एक एव आम्नायः तं ॥ अवैति जानाति ॥ सः (कुलजनः) ॥ भुवि पृथिव्यां ॥ विविधभोगान् नानासुखैश्वर्यविलासान् ॥ भुक्त्वा अनुभूय ॥ मुक्तः स्यात् मुक्तिं प्राप्नोति ॥ (देहान्ते इति भावः) ॥ पुनः भूयः ॥ चतुराम्नायविदुषः चतुराम्नायवेत्तुः ॥ किं ॥ वक्तव्यं वर्णनीयं ॥ (किमपि वर्णनं नास्ति इत्यर्थः) ॥ महोद्र्ध्वाम्नायज्ञः षडाम्नायक्रमगोद्र्ध्वाम्नायवेत्ता ॥ कथं केन प्रकारेण ॥ इह संसारे ॥ इतरैः इतरमनुजैः ॥ स्तुत्यः स्तोतुं शक्यः ॥ भवेत् ॥ (क्रमदीक्षायुतोद्र्ध्वाम्नायज्ञं वर्णितुं नैव शक्यते इति भावः) ॥

## तत्र शास्त्रवचनप्रमाणम्

"एकाम्नायञ्च यो वेत्ति स मुक्तो नात्र संशयः ।
किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवो भवेत् ॥

चतुराम्नायविज्ञानादूद्ध्वाम्नायपरः प्रिये।
तस्मात्तदेव जानीयाद् यदीच्छेत् सिद्धिमात्मनः ॥
ऊद्ध्वत्वात् सर्व धर्म्माणामूद्ध्वाम्नायः प्रशस्यते।
ऊद्ध्व नयत्यधःस्थश्च ऊद्ध्वाम्नाय इतीरितः ॥" इति
श्रीकुलार्णवतन्त्रवचनम्।

॥ ४८ ॥

परे किं वेद्मीत्थं तव विविधलीलां जडमतिः
स्वरूपाम्नायानामपि च मतभेदान्मनुमयान् ॥
तथापि स्तोत्रन्ते विरचितमिदं यच्च विदितम्
कृपेयन्ते मातः किल निरुपमा श्रीपरशिवे ॥४६॥

अन्वयः — हे परे श्रीपरशिवे ! मातः ! जडमतिः (अहं) इत्थं तव विविधलीलां स्वरूपाम्नायानां मनुमयान् मतभेदान् अपि च किं वेद्मि ? तथापि मया यत् विदितं (तेन) च (मया) इदं ते स्तोत्रं विरचितम्। इयं किल ते निरुपमा कृपा (मयि) सञ्जाता ।

व्याख्या — हे परे विमर्शशक्ते ! श्रीपरशिवे श्रीविद्ये ! मातः जननि ! जडमतिः अल्पज्ञः ॥ अहं ॥ इत्थं ईदृशीं ॥ तव ते ॥ विविधलीलां नानाविलासं ॥ स्वरूपाणि (ध्यानादि) च मूर्त्तयश्च आम्नायाश्च सिंहासनाश्च तेषां ॥ मनुमयान् मन्त्रप्रचुरान् ॥ मतभेदान् कहसादिक्रमभेदान् ॥ अपि च ॥ किं वेद्मि किं जानामि ? (किमपि न वेद्मीतिभावः) ॥ तथापि ॥ मया ॥ यत् यदल्पकं ॥ विदितं ज्ञातं ॥ (तेन) च ॥ (मया) इदं एतत् ॥ ते

तव ॥ स्तोत्रं स्तुतिः ॥ विरचितं निर्मितं ॥ इयं एषा ॥ किल निश्चयेन ॥ ते तव ॥ निरुपमा सर्वोत्तमा ॥ कृपा दया ॥ (ममोपरि सञ्जाता इति भावः) ॥

## तत्र शास्त्रवचनप्रमाणम्

"त्वया महेशानि हृदिस्थितोऽहं
यथानियुक्तोऽस्मि तथा करोमि ॥" इति
आगमवचनप्रमाणम् ।

"या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥" इति

"या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥" इति

"यच्च किञ्चित् क्वचिद्वस्तु सदसद्वाऽखिलात्मिके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥" इति च
सप्तशतीवचनप्रमाणम् ।

॥ ४६ ॥

राणावंशोद्भवोऽहं जननि पराशिवे बीरशम्शेरपौत्रः
सर्वाम्नायस्वरूपे कलिकलुषहरे रुद्रशम्शेरपुत्रः ॥
मूढो विद्याविहीनो भगवति धनशम्शेरवर्म्मा परेशि
क्षुद्रोऽयंचेतिमत्वाममपदरचनादोषजातं क्षमस्व ॥५०

अन्वयः — हे पराशिवे जननि भगवति सर्वाम्नायस्व-

रूपे कलिकलुषहरे परेशि ! राणावंशोद्भवः बीरशम्शेरपौत्रः रुद्रशम्शेरपुत्रः धनशम्शेरवर्म्मा अहं विद्याविहीनः मूढः (अस्मि)। "अयं क्षुद्रः (अस्ति)" इति च (मां) मत्वा मम पद-रचनादोषजातं क्षमस्व ॥

॥ ५० ॥

इति श्रीधनशम्शेरवर्म्मणा विरचितं अन्वयव्याख्याशास्त्र-वचनप्रमाणसहितं श्रीपरामहिमस्तोत्रं सम्पूर्णम् ॥

॥ शुभम् ॥

